इब्रीयभाषातो व्याकृतः

# सुलेमना लिखितो हितोपदेशोऽयं।



THE

# PROVERBS OF SOLOMON

IN SANSCRIT.

CALCUTTA:

PRINTED AT THE CALCUTTA SCHOOL-BOOK SOCIETY'S PRESS,
AND SOLD AT ITS DEPOSITORY.

1842.

# अथ हितोपदेशः।



## १ प्रथमोऽध्यायः।

१ आभाषा ७ विद्यायास्तत्त्वज्ञानस्य वा कथनं १० पापिलोकेभ्योऽवश्यं पृथग्भवितव्यता २० विद्यायाः कथनं २४ विद्याभर्त्सनकथनञ्च।

१ विद्यां ग्राहयितुं लोकान् समुपादेष्टुमेव च।
प्रबोधकारिवाक्यानि परिज्ञापयितुन्तथा।
२ बुद्धिं धर्म्मं विचारञ्च न्यायं ग्राहयितुं जनान्।
३ दातुं विवेकमज्ञाय यूने ज्ञानञ्च मन्त्रणाम्।
४ इस्रायेल्राजदायूद् स्तनयेन सुलेमना।
अयं हितोपदेशानाम् अभिप्रायः प्रदर्श्यते।
५ बोद्धुं हितोपदेशार्थं विदुषां वचनानि च।
ज्ञातुं तेषाञ्च गूढार्थं बुद्धिमान् मानवस्तु यः।
६ निधाय मानसं तत्र स तानि बहुधाभ्यसेत्।
एव सुबुद्धिलोकस्य लभतां शुभमन्त्रणाम्॥
७ तदेवारभते ज्ञानं यद्भयं परमेश्वरात्।
विद्याञ्च ह्युपदेशञ्च तुच्छीकुर्व्वन्त्यबुद्धयः।

८ हे मत्पुत्र स्वतातस्य सूपदेशं निशामय।
तथा स्वमातुरादेशो न परित्यज्यतां त्वया।
९ यतस्तद्वचनं मूर्द्ध्नः प्रसादभूषणं तव।
त ।कण्ठप्रदेशस्य मनोज्ञहारवत् तव॥
१० पापिभि र्दर्शितं लाभं न सम्मन्यस्व मत्सुत
तथा तैरिति संप्रोक्ते त्वमस्माभिः सहाव्रज।
११ तिष्ठाम गोपयन्तः स्वान् रक्तं पातयितुं वयं।
अकारणञ्च निर्दोषान् धर्त्तुं तिष्ठाम गोपिताः
१२ ग्रसाम च वयं सर्व्वे जीवतस्तान् श्मशानवत्
यथा च पतितान् खाते ग्रसाम तान् व॰ ॰थ
१३ सर्व्वमूल्यीयवस्तूनि तेन लप्स्यामहे व॰
द्रव्यैश्च लुठितैः सर्व्वैः पूरयिष्यामहे गृहान्।
१४ आगच्छ च त्वमस्माकम् अंशग्राही जनो भव।
अस्माकमेव सर्व्वेषाम् एको धननिधि र्भवेत्।
१५ हे मत्पुत्र न तैः सार्द्धं त्वं तेन वर्त्मना व्रज।
तेषां मार्गात् त्वदीयौ द्वौ चरणौ परिवर्त्तय।
१६ तेषां पादाः कुकर्म्माणि कर्त्तुं धावन्ति वै यतः
रक्तं पातयितुं वेगाद् धावमाना भवन्ति च।
१७ मुधैव जालपातः स्यात् पक्षिणां दृष्टिगोचरे।
१८ रक्तं पातयितुं स्वीयं गुप्तास्तिष्ठन्ति ते जनाः।
धर्त्तुं स्वकीयप्राणांस्ते स्वयं तिष्ठन्ति गोपिताः।

१८ धनाधिकारिणां प्राणान् ये घ्नन्ति धनलोभतः।
तेषामेव मनुष्याणां जायते गतिरीदृशी॥

२० समाह्वयति विद्यैव वह्निरेव समास्थिता।
सर्व्वराजपथे स्थित्वा प्रोच्चैः शब्दं करोति च।

२१ मुख्यस्थाने समज्यायाः समाह्वयति सा स्वयम्।
पुरस्य द्वारि मुक्ते सा वाक्यान्येतानि वक्ति च।

२२ अज्ञा यूयं कियत्कालम् अज्ञाने परिसंस्थत।
निन्दकाश्च कियत्कालं निन्दायां परितोक्ष्यथ।
अज्ञा सर्व्वे कियत्कालं ज्ञानं समवमंस्यथ।
व्याघोटयत चित्तानि मदीयपरिभर्त्सनात्।

२३ ततो युष्मसमीपेऽहं वक्ष्यामि मनसः कथाः।
युष्मान् संज्ञापयिष्यामि स्वकीयां सकलां कथाम्॥

२४ मयाहूते न युष्माभिरुत्तरं पर्य्यदीयत।
न यूयं सममन्यध्वं प्रसारितकरे मयि।

२५ किन्तु तुच्छाः क्रियन्ते स्म युष्माभि र्मम मन्त्रणाः।
मत्कृतां भर्त्सनां यूयं श्रोतुं नैव समैच्छत।

२६ अतोऽहं प्रहसिष्यामि युष्माकं विपदागमे।
परिहासं करिष्यामि भये युष्मान् उपस्थिते।

२७ आयास्यति यदा युष्मान् साध्वसं नाशको यथा।
समेष्यति यदा युष्मान् झञ्झापवनवद् विपद्।
यदा दुःखञ्च कष्टञ्च युष्माकं सङ्घटिष्यतः।

१८ क्लिश्येऽहं तदा सर्व्वैः किन्तु दास्ये न चे
ष्यन्ति प्रभाते मां किन्तु द्रक्ष्यन्ति
१९ यतस्तै मानवे श्चानं पर्य्यवामानि सर्व्वथ
साकार्पुस्य मनोनीतं साध्वसं परमेश्वरा।
२० मदीया मन्त्रणा नैव प्रत्यादिष्ठात तै जनै:
मामकं भर्त्सनावाक्यं तथा तुच्छमकुर्व्वत
२१ अतस्ते परिभोक्ष्यन्ते फलानि निजकर्म्मणा
स्वीयकुमन्त्रणायाश्च प्राप्स्यन्ति सकलं फलम्
२२ अविज्ञानां विमार्गेण गमस्तान् प्रविनंक्ष्यति
उन्नति मूर्खलोकानां तानेव परिनंक्ष्यति।
२३ शृणोति मे कथां यस्तु स वत्स्यति निरापदा
भयादमङ्गलानाञ्च स विश्राममवाप्स्यति॥

## २ द्वितीयोऽध्यायः।

१ ज्ञानद्वारा रक्षणं १० पापिभ्यो निस्तरणं २०

१ हे मत्पुत्र प्रगटीया यदि त्वं वचनं मम।
मामकीनं निदेशञ्च स्थापये यदि मानसे।
२ तथा त्वं यदि विद्यायां मनोयोगं समाचरेः।
तथा त्वया निबोद्धुं चेत् मानसं संनिधीयते।
३ अपरं ज्ञानमेव त्वं यदि सम्यक् समाह्वयेः।
यदि त्वया मनीषार्थे प्रोच्चैः शब्दः क्रियेत च।
४ तथा दुर्वर्णवत् त्वं चेत् तामेव संगवेषयेः।

यथा गुप्तधनं तां त्वं मृगयेथास्तथा यदि।
५ तदा परेश्वराद् भीतिं त्वं बोद्धुं परिभ्रच्यसि।
तथा त्वमैश्वरं सम्यक् तत्त्वज्ञानमवाप्स्यसि।
६ यतः परेश्वरेणैव तत्त्वज्ञानं प्रदीयते।
ज्ञानं बुद्धिश्च निर्गच्छेत् तदीयादेव वक्त्रतः।
७ धार्म्मिकानां निमित्तं स तत्त्वज्ञानं निधापयेत्।
सरलाचारिलोकानां स एव फलको मतः।
८ तथा न्यायस्य तेनैव पदवी परिरक्ष्यते।
स्वकीयपूतलोकानां पन्थाश्च प्रतिपाल्यते।
९ अतो धर्म्मस्य मार्गं त्वं विचारन्याययोस्तथा।
मङ्गलस्य च सर्व्वस्य परिज्ञातुं प्रभच्यसि॥
१०　त्वदीयहृदयं विद्या यत्काले संप्रवेक्ष्यति।
ज्ञानं त्वदीयप्राणानां तुष्टिञ्च जनयिष्यति।
११ परिणामप्रदर्शित्वं तदा त्वां पालयिष्यति।
तथैव धिषणा नित्यं त्वामेव पर्य्यविष्यति।
१२ भवन्ति ये नरा दुष्टा अन्यथा भाषिणश्च ये।
परित्यजन्ति धर्म्मस्य पन्थानं ये च मानवाः।
१३ तथान्धकारमार्गेण कुर्व्वन्ति गमनञ्च ये।
कर्त्तुं कुकर्म्म तुष्यन्ति दुष्टासत्कर्म्महर्षिणः।
१४ वक्रे वर्त्मनि गन्तारस्तथा त्रिपथगामिनः।
१५ मार्गात् तेषां जनानां त्वां शेमुषी रक्षिष्यति।

१६ या वेश्यार्थात् परा नारी मनोहरवचो वदेत्
तया यौवनकालीनं स्वीयं मित्रं विहाय या।
१७ ईश्वरस्य स्वकीयस्य नियमं परिविस्मरेत्।
निवेशनं यदीयञ्च मृत्युं प्रख्यापयेन्नरान्।
१८ यदीया पदवी लोकं परलोकञ्च संनयेत्।
गत्वा यस्याः समीपञ्च न कोपि परिवर्त्तते।
१९ तथा संजीवनाध्वानं पुनः प्राप्नोति कोपि न।
एतादृग्योषितः प्रज्ञा तवोद्धारं करिष्यति॥
२० अतस्त्वं साधुलोकानां मार्गेण गमनं कुरु।
त्वया धार्म्मिकलोकानां पदवी परिलोक्यतां।
२१ यतो देशे निवत्स्यन्ति सरला एव मानवाः।
तएवाधिकरिष्यन्ति तं ये स्युः साधवो नराः।
२२ किन्तु देशात् समुच्छिन्नाः संभविष्यन्ति पापिनः।
उन्मूलिता भविष्यन्ति देशतः पिशुना जनाः॥

## ३ तृतीयोऽध्यायः।

१ आज्ञा पालयितुं विनयः ५ परमेश्वरे विश्वसितुं विनयः ७ ईश्वरं भजितुं विनयः ११ ईश्वरस्य शास्तिं स्वीकर्त्तुं विनयः १३ ज्ञानेन लाभः २१ ज्ञानस्य फलं २७ नानोपदेशश्च।

१ हे सत्पुत्र व्यवस्थां मे त्वं कदापि न विस्मर।
तवान्तःकरणेनाज्ञा मदीया परिपाल्यताम्।
२ दीर्घायुश्चिरजीवित्वं शान्तिश्च तेन लप्स्यसे।

एवं दया च सत्यत्वं यथा त्वां न परित्यजेत् ।
३ एतदर्थमुभे ते त्वं निजकण्ठे प्रधारय ।
स्वकीयचित्तपत्रे च लिखित्वा स्थापयस्व ते ।
४ ईश्वराच्च कृते तस्मिन् मानुषादपि सर्व्वतः ।
अनुग्रहश्च सम्मानं त्वया सम्यगवाप्स्यते ॥
५ सर्व्वान्तःकरणैश्च त्वं विश्वसिहि परेश्वरे ।
धिषणायां निजायां न विश्वासः क्रियतां त्वया ।
६ गतिषु स्वासु सर्व्वासु स्वीकर्त्तव्यः सएव ते ।
तेनैव तव पन्थानं सरलं स करिष्यति ॥
७ त्वं स्वयं नैव जानीहि ज्ञानवन्तं कदाचन ।
परमेशाद् बिभीहि त्वं पापाद् भव पराङ्मुखः ।
८ यतस्त्वदीयमांसानां तेन स्वास्थ्यं भविष्यति ।
कीकसानाञ्च ते मज्जा तेनैव सम्भविष्यति ।
९ स्वकीयेनैव वित्तेन समर्च्चय त्वमीश्वरम् ।
जातवस्त्वादिजातेन फलेन च तमर्च्चय ।
१० तेन ते धनसम्पूर्णं भाण्डागारं भविष्यति ।
उच्छलिष्यति यन्त्रे च नव्यद्राक्षारसस्तव ॥
११ परेशेन कृतां शास्तिं हे मत्पुत्र न तुच्छय ।
तेन संभर्त्सितः संस्त्वं नहि क्लाम्य कदाचन ।
१२ यतः परेश्वरः प्रेम करोति यत्र मानवे ।
तस्मै ददाति शास्तिञ्च पिता स्वप्रियपुत्रवत् ॥

१३ विद्या समर्ज्यते येन स धन्यो जायते नरः।
धिषणा लभ्यते येन स च धन्यो भवेन्नरः।

१४ यतो कृष्यस्य वाणिज्यात् तद् वाणिज्यं महोत्तमं।
तथा सुवर्णलाभाच्च तल्लाभः श्रेष्ठ उच्यते।

१५ मुक्तारत्नं यदस्तीह महामूल्या ततोपि सा।
यच्च किञ्चित् त्वदीयेष्टं न तत् किमपि तत्समं।

१६ तदीयदक्षिणे हस्ते दीर्घमायुः सुतिष्ठति।
तस्य वामकरे वित्तं सम्मानमपि तिष्ठति।

१७ तदीयाः सकला मार्गा भवन्ति सुखदायकाः।
तस्याः सर्व्वेपि पन्थानो भवन्ति शान्तिदायकाः।

१८ तदाश्रितजनेभ्यः सा जीवनप्रदपादपः।
तामाश्रयति यो लोकः स धन्यो जायते नरः।

१९ अस्थापयन् महीमूलं ज्ञानेन परमेश्वरः।
आकाशमण्डलं तेन प्रज्ञया परिनिर्म्मितं।

२० कीलालमपि निर्गच्छेद् गम्भीरात् तस्य प्रज्ञया।
तथा कुज्झटिका वृष्टिराकाशमण्डलाद् भवेत्॥

२१ हे वत्स सर्व्वमेतत् ते नेत्रयो र्गोचरोभवेत्।
तत्त्वज्ञानञ्च रत्न त्वं परिणामप्रदर्शिताम्।

२२ मानसस्य त्वदीयस्य जीवनं तद् भविष्यति।
कण्ठस्य च त्वदीयस्य भूषणं तद् भविष्यति।

२३ तत् प्राप्य त्वं स्वमार्गेण भीतिहीनो गमिष्यसि।

न भविष्यति बाधा च गमने तव पादयोः।

२४ तथा शयनकाले ते नैव स्थास्यति साध्वसं।

सुखेन भविता निद्रा शयनं त्वयि कुर्व्वति।

२५ चेद् विपद् जायतेऽकस्माद् दुष्टा नाशं व्रजन्ति च।

तथापि च कदापि त्वं शङ्कां नैव गमिष्यसि।

२६ तव विश्वासपात्रं हि परमेशो भविष्यति।

चरणौ तावकीनौ च स उन्माथाद्विष्यति॥

२७ अपरं यदि ते हस्ते दातुं तिष्ठति सम्भवः।

यस्मै जनाय दातव्यं न तं कुर्य्याः पराङ्मुखं।

२८ द्रव्ये तिष्ठति ते हस्ते समीपवासिनं तव।

त्वं याहि पुनरायाहि श्वोदास्यामीति मा वद।

२९ वसेत् समीपवासी ते निर्भयेनेति कारणात्।

तद्विरुद्धं त्वया नैवाहितं चिन्त्यं कदाचन।

३० तावकीनेऽशुभे येन केनापि न कृते पुरा।

विरोधो न त्वया कार्य्यस्तेन सार्द्धमकारणं।

३१ अन्यायकारिलोकेभ्यो मा त्वमीर्ष्य कदाचन।

तस्य किञ्चन मार्गं त्वं मनोनीतञ्च मा कुरु।

३२ ऋतीयाभाजनं यस्माद् दुष्टलोकः परेशितुः।

किन्तु धर्म्मिजनैः सार्द्धं तद्गूढवचनं भवेत्।

३३ ईश्वरस्याभिशापोऽस्ति पापिलोकनिकेतने।

किन्तु धार्म्मिकलोकानां वेश्मन्याशीः सुतिष्ठति।

२४ तुच्छकारिजनान् सर्व्वान् तुच्छानेव करोति ।
　　किन्तु नम्रमनुष्येषु क्रियतेऽनुग्रहः सदा ।
२५ सम्मानमधिकुर्व्वन्ति ज्ञानवन्तस्तु मानवा
　　किन्त्वज्ञानमनुष्याणाम् उन्नतिः स्यात् च ॥

## ४ चतुर्थोऽध्यायः।

१ सुलेमनो विनयवाक्यं १० सद्वाक्यस्य फलं पापिभ्यः पृथग् भवितुं विनयः २० सावधानो भवितुं ।

१　उपदेशं पितु र्यूयं निशामयत बालकाः
　　विद्यां बोद्धुं स्वकीयानि मानसानि निधत्त च
२ तेनैवाहं प्रदास्यामि युष्मभ्यम् उपदेशनं ।
　　युष्माभि र्न परित्याज्या व्यवस्था मम कर्हिचित्
३ यताहमपि तातस्य स्वकीयस्यासमात्मजः ।
　　एकएवाहमासञ्च स्वमातुः प्रियदर्शनः ।
४ इत्युक्त्वाशिक्षयत् मां स मनसा रक्ष मे वचः ।
　　मदाज्ञां पालयित्वा त्वं संधारय च जीवनम् ।
५ शेमुषीं संलभस्व त्वं विद्याञ्च समुपार्जय ।
　　तां न विस्मर मा भू र्मे वक्त्रवाक्यात् पराङ्मुखः ।
६ तन्न त्यज च तेन त्वं रक्षणं समवाप्स्यसि ।
　　तत्रैव त्वं कुरु प्रेम तस्माद् रक्षाञ्च प्राप्स्यसि ।
७ सर्व्वस्मात् श्रेयसी विद्या ततो विद्यामुपार्जय ।
　　सर्व्वस्मादेव लाभात् त्वं धिषणालभनं कुरु ।

८ तामेव च प्रशंस त्वं प्राप्स्यस्युच्चपदं ततः।
तस्या आलिङ्गनं कुर्य्याः सम्मानं तेन प्राप्स्यसि।
९ सा त्वदीयोत्तमाङ्गाय श्रेष्ठं दास्यति भूषणं।
सौन्दर्य्यस्य किरीटञ्च सैव ते सम्प्रदास्यति॥
१० हे मत्पुत्र शृणु त्वं मे वचनग्रहणं कुरु।
तेन तेऽनेकवर्षाणि परमायुर्भविष्यति।
११ ज्ञानस्य पद्वी या तां त्वामहं परिशिक्षये।
तथा यथार्थमार्गेण मया त्वं संप्रयाप्यसे।
१२ तेन ते गमने पादौ सङ्कोचं न प्रयास्यतः।
रभसा गमने नैव बाधाञ्च समवाप्स्यतः।
१३ दृढं हितोपदेशं त्वं गृहाण न च यापय।
तं संरक्ष च यस्मात् स त्वदीयं जीवनं भवेत्॥
१४ पद्वी पापिलोकानां त्वया नैव प्रविश्यतां।
न त्वं दुष्टमनुष्याणां मार्गेण गमनं कुरु।
१५ तं परित्यज नो तस्य समीपेन प्रयाहि च।
तस्मात् त्वं विमुखीभूय प्रगच्छेरन्यवर्त्मना।
१६ दुष्कर्म्माण्यकृते तेषां यतो निद्रा न जायते।
न भ्रंमिते च कस्मिंश्चित् तेषां निद्रा न भज्यते।
१७ ते जनाः पापभक्ष्याणां कुर्व्वन्ति परिभक्षणं।
तथा पिवन्ति ते लोका दौरात्म्यगोस्तनीरसं।
१८ किन्तु भानो यथा भानुरामध्याह्नं प्रवर्द्धते।

पन्था धार्म्मिकलोकानां तेजस्वी जायते तथा।
१८ पदवी पापिलोकानां ध्वान्तस्य सदृशी भवेत्।
केन बाधां प्रगच्छन्ति नेति जानन्ति ते जनाः॥

हे मदीयसुत त्वं मे वाक्ये चित्तं नियोजय।
वचने मामकीने त्वं तव कर्णौ निधेहि च
१ तदन्यत्र न संयायात् त्वदीयनेत्रगोचरात्।
तदेव मनसो मध्ये प्रयत्नादपि धारय।
२ यत एतत्तु यैरेव मानवैः परिलभ्यते।
तेषां स्यादखिलाङ्गानां स्वस्थता जीवनस्य च।
१ जीवनस्य प्रवाहोयं यस्मादेव प्रजायते।
स्वीयस्य मनसस्तस्य सर्व्वथा रक्षणं कुरु।
१ स्वकीयादाननात् त्वञ्च दुर्व्वाक्यान्यपसारय।
तथा स्वीयौष्ठयुग्मात् त्वं कुवाक्यानि विदूरय।
१ अग्रे दृष्टिं प्रकुर्व्वातां तावकीने सुचक्षुषी।
सम्मुखे परिवीक्षेतां चक्षुषोः पक्ष्मणी तव।
स्वकीयपादयोः पन्था त्वया सम्यग् विविच्यतां।
तेन स्थिरा भविष्यन्ति सकला गतयस्तव।
दक्षिणाञ्चैव वामञ्च नैव त्वं परिगच्छ च।
अशुभाद् वारितं भूयात् त्वदीयचरणद्वयं॥

---

## ५ पञ्चमोऽध्यायः।

१ सुतेमनो विनयकथनं ७ वेश्याया विरुद्धकथनं १५ विवाहप्रशंसनञ्च।

१　　हे मत्पुत्र मदीयायां विद्यायां धेहि मानसं।
मदीयधिषणायां त्वं श्रवणौ ते निधेहि च।
२ परिणामप्रदर्शित्वं तेनैव त्वमविष्यसि।
ज्ञानवाक्यं स्ववक्त्रेण त्वमेव पालयिष्यसि॥
३　　मधु चरति वेश्याया अधरान् मधुवासवत्।
तथैव काकुदं तस्या स्तैलाच्च स्नेहमंयुतं।
४ किन्तु तिक्तं प्रजायेत चरमे नागदानवत्।
तदेव जायते तीक्ष्णं द्विधारचन्द्रहासवत्।
५ एवं तदीयपादौ द्वौ मृत्युं समवरोहतः।
तदीयः पादविक्षेपः श्मशानमेव गच्छति।
६ जीवनस्यायनं नैव तया सम्यग् विविच्यते।
आचारश्चञ्चलस्तस्या बोद्धुं नैव च शक्यते।
७ अतो हे बालका यूयं शृणुत वचनं मम।
मद्वक्त्रवचनाद् यूयं मैवाभूत पराङ्मुखाः।
८ त्वं तस्या निजपन्थानम् अतिदूरे निधेहि च।
भवनस्य तदीयस्य समीपमपि नो व्रजेः।
९ नो चेत् त्वदीयसम्मानम् अन्यस्मै परिदास्यते।
त्वदीयं परमायुश्च निर्दयाय प्रदास्यते।

१० परितुष्टा भविष्यन्ति त्वद्गुणैरितरे जनाः।
तव श्रमफलैः पूर्णम् अन्यवेश्म भविष्यति।
११ तथा त्वदीयमांसे च शरीरे च क्षयं गते।
परिहस्य त्वया पश्चाद् वाक्यमेतद् वदिष्यते।
१२ हा हा हितोपदेशः स मया कस्मादृतोयितः।
कुतश्च भर्त्सनं तुच्छं मदीयमनसा कृतं।
१३ कुतोऽहं गुरुलोकानां वाक्यानि श्रुतवान न च।
कुतस्तेषाञ्च शिक्षायां न्यधायि न मया मनः।
१४ आसं सर्व्वापदि प्रायः समाजसभयोरहम्।
१५ निजजलाशयस्यैव पानीयं पीयतां त्वया।
स्वीयप्रस्रवणस्रोतः सलिलं परिपीयतां।
१६ तव प्रस्रवणं कस्माद् वहि र्विस्तारयिष्यते।
कीलालस्य तव स्रोतस्तिष्ठेद् राजपथे कुतः।
१७ तथा तदीयपानीयं त्वदीयं केवलं भवेत्।
त्वया सार्द्धं यथान्यस्य जनस्य न च तद् भवेत्।
१८ प्रस्रवणं त्वदीयं यत् धन्यं भूयात् तदेव ते।
युवत्यां निजभार्य्यायां तुष्यतां सर्व्वदा त्वया।
१९ मृगीव प्रेमिणी सा स्याद् वातमृगीव रूपिणी।
तस्याः पयोधरेण त्वं सर्व्वदाप्यायितो भव।
तथा तदीयप्रेम्णा च सर्व्वदा रम्यतां त्वया।
२० हे मत्पुत्र तव स्वान्तं वेश्यया ह्रियते कुतः।

परकीयस्त्रिया वचः कुतः संरज्यते त्वया।

२१ सर्व्वा मार्गा मनुष्याणाम् ईश्वरस्य गोचरो भवेत्।

विचार्य्यते च तेनैव तदीया सकला गतिः।

२२ किल्विषेण स्वकीयेन धृतो भवति किल्विषी।

स्वकीयपापरज्ज्वा च बद्धो भवति पातकी।

२३ भ्रान्तिभि र्बहुलाभिः स परिभ्राम्यति मानवः।

उपदेशं विना स्वीयान् प्राणानपि परित्यजेत्॥

## ६ षष्ठोऽध्यायः।

१ प्रतिभूत्वनिषेधः ६ आलस्यविरुद्धकथनं १२ दुःशीलोक-विरुद्धकथनं १६ सप्त घृणास्पदानि २० आज्ञापालनफलं २५ परदारगमनात् चतित्व।

१ हे मदीयसुत त्वं चेत् स्वबन्धोः प्रतिभू र्भवेः।

अन्यस्य विषये त्वं चेत् स्वीयहस्तौ समर्पयेः।

२ तर्हि स्वकीयवाक्ये त्वं प्रोन्माथे पतितो भवेः।

तथा स्वकीयवक्त्रस्य वचनैस्त्वं धृतो भवेः।

३ अतो हे मम पुत्र त्वं निजबन्धोः करं गतः।

इदानीं त्वं निजप्राणान् इत्थमेव समुद्धर।

४ गत्वा च निजबन्धुं त्वं प्रणिपत्य प्रसादय।

निद्रातो वार्य्यतां नेत्रं त्वत् पक्ष्म च निमीलनात्।

५ व्याधान्माथाद् यथा पक्षी हरिणश्च पलायते।

तथैव स्वयमात्मानं त्वं सम्यक् परिमोचय॥

६ पिपीलिकान्तिकं गत्वा तत्कर्म्माणि विलोक्य च।

त्वं ज्ञानं परिगिरिया आलस्यशीलमानव।
७ तस्या भूमिपति र्नास्ति तदध्यक्षो न विद्यते।
तथा तस्याः प्रभुः कोपि न तिष्ठति कदाचन।
८ संग्टह्लाति स्वभक्ष्याणि ग्रीष्मकाले तथापि सा
शस्यकर्त्तनकाले च स्वाहारं सञ्चिनोति सा।
९ कति कालं स्वशय्यायाम् अलम स्यास्यते त्वया
उत्थास्यसि च निद्रातस्त्वं कदालसमानव।
१० अल्पकालं भवेन्निद्रा तथा तन्द्रा च जायते।
एवं करद्वये स्वीये निद्रया जडिते कृते।
११ दरिद्रता त्वदीया च यथा दस्यु स्तयैष्यति।
उपस्थास्यति ते दैन्यं सज्जितेव वरूथिनी॥
१२ यो नरः पातकै र्युक्तः स दुष्टमनुजो भवेत्।
स सर्व्वदा स्ववक्त्रेण कटुवाक्यं प्रभाषते।
१३ आकारयति नेत्राभ्यां पादाभ्यां बोधयत्यपि।
अङ्गुलीभिः स्वकीयाभिः स शिक्षयति मानवान्।
१४ सञ्चिन्तयति चित्तेन निजेन कुटिलेन सः।
स मानुषो विवादस्य वीजं वपति सर्व्वदा।
१५ अतएव विपत् तस्य हठादेव भविष्यति।
प्रतीकारं विनाकस्मात् स मनुष्यो विनंक्ष्यति॥
१६ अनथ्यवादिनी जिह्वा या च दृष्टिः सगर्व्विका।
निर्दोषाणां मनुष्याणां शोणितपातिनौ करौ।

एवं कुमन्त्रणाकारि सततं यच्च मानसं।
तथा कुकर्म्म कर्त्तुञ्च चरणौ शीघ्रगामिनौ।
मृषासाक्षी च भूत्वा यो मृषावाक्यं वदेन्नरः।
तथैव भ्रातृमध्ये यो विरोधं जनयेन्नरः।
एते सप्त परेशस्य घृण्याः षट् तु विशेषतः।
एतान् सर्व्वान् मनो मध्ये सततं स ऋतीयते॥
हे मत्पुत्त्र स्वतातस्य निदेशं परिपालय।
स्वीयमातु र्व्यवस्थाञ्च कदापि न परित्यजेः।
ग्रथित्वा हृदि तां धेहि कण्ठदेशे बधान च।
ततो गमनकाले सा त्वया सह गमिष्यति।
सा त्वां शयनकाले च सर्व्वदा समविष्यति।
जाग्रत्काले त्वया सार्द्धं संलापं सा करिष्यति।
प्रियंवदा च या वेश्या या च स्याद् व्यभिचारिणी।
ततो रक्षाविधानार्थम् आज्ञा प्रदीपवद् भवेत्।
दीप्तिवच्च व्यवस्था स्याद् हितोपदेशभर्त्सनं।
यथा जीवनदो मार्गस्तथैव भवति ध्रुवम्॥
त्वयान्तःकरणैस्तस्याः सौन्दर्य्यं नाभिलष्यताम्।
तदीयेन कटाक्षेण त्वं नैव च धृतो भवेः।
अन्नाभावश्च लोकानां वेश्यातो जायते यतः।
म्रियन्ते व्यभिचारिण्या नृणां प्राणा महाधनाः।
यथा न वाससा सार्द्धं वह्निना परिधक्ष्यते।

तथा वक्षसि वह्निं को जनः स्थापयितुं क्षमः।

२८ यथा पादतलं नैव वीतिहोत्रेण धक्ष्यते।

तथा गन्तुं समर्थः को ज्वलदङ्गारकोपरि।

२९ समीपवासिनो जायां यो गच्छेत् स तथा भवेत्।

यस्तां स्पृशति निर्दोषः स च नैव भविष्यति।

३० क्षुधार्त्तो रक्षितुं प्राणान् चेच्चोरयति चौरकः।

तथापि तमदण्डार्हं नैव जानाति मानवः।

३१ चोरितस्य गुणाः सप्त देयास्तेन धृतेन च।

यदि स्यात् स्वीयसर्वस्वं तथापि देयमेव तत्।

३२ व्यभिचारी पुमानेव निर्बोधः परिचक्ष्यते।

यतो व्यभिचरेद् यो ना स स्वप्राणान् विनाशयेत्।

३३ तथा दण्डविशिष्टः स्यात् लज्जावानपि जायते।

कदापि तस्य लोकस्य नापमानं विनश्यति।

३४ यतः स्त्रीरितुर्क्रुद्धा या सा पुमांसं प्रकोपयेत्।

दण्डकाले मनुष्यः स क्षमां नहि करिष्यति।

३५ स पारितोषिकं नैव ग्रहीष्यति किञ्चन।

प्राप्यानेकधनं नापि स सन्तोषं गमिष्यति॥

## ७ सप्तमोऽध्यायः।

१ सुलेमनो विनयकथनं ६ वेश्याया व्यवहार-वर्णनं २४ तस्याः स्थानत्यागस्यावश्यकता च।

१ हे मत्पुत्र मदीयं त्वं वचनं परिपालय।

त्वं मदीयं निदेशञ्च निजचेतसि धारय।
२ पालयित्वा मदीयाज्ञां त्वञ्च धारय जीवनम्।
पालय त्वं व्यवस्थां मे तारे इव स्वचक्षुषो।
३ अङ्गुलीषु त्वदीयासु तामेव संवधान च।
अन्तःकरणपत्रे च लिखित्वा त्वं निधेहि ताम्।
४ या नारी स्वैरिणी याच प्रियवाग्व्यभिचारिणी।
ताभ्यां द्वाभ्यां सकाशाच्च निजप्राणान् प्ररक्षितुं।
५ त्वया विद्या प्रवक्तव्या मम त्वं भगिनी भवः।
तयोच्यतां मनीषा च त्वन्तु ज्ञाति भव मम।
६ अहं स्वकीयगेहस्यातिष्ठं वातायने पुरा।
वातायनस्य मार्गेण समदर्शि मया यदा।
७ तदाज्ञानमनुष्येषु मया दृष्टेषु केषुचित्।
तेषां युवमनुष्याणाम् एकोऽबोधो निरीक्षितः।
८ सन्ध्याकाले च गोधूल्यां निशाया अन्धकारतः।
तदानीञ्च निशीथिन्याः प्रारम्भो जायते यदा।
९ स जनो व्यभिचारिण्या गृहकोणं प्रगत्य च।
भवनस्य तदीयस्य मार्गेण स पुमान् गतः।
१० तयैव चतुरा काचित् स्वैरिणी वेषधारिणी।
तदा सीमन्तिनी तेन पुरुषेण सहामिलत्।
११ शठा भवति सा योषिद् भवेद् दम्भवती च सा।
तस्याश्च चरणौ गेहे तिष्ठतो नैव कर्हिचित्।

१२ हट्टस्थाने कदाचिच्च पदव्याञ्च कदाचन।
कदाचिन्मार्गकोणे च तिष्ठती सा प्रतीक्षते।

१३ पश्चात् तं मानुषं धृत्वा सा नारी पर्य्यचुम्बयत्।
तथा निर्लज्जवक्त्रा सा तं पुमांसमभाषत।

१४ तेमायाद्य बलिं दत्वा साधितं निजमानसम्।
साक्षात् कर्त्तुमहं त्वाञ्च वदनं ते निरीक्षितुम्।

१५ एवं यत्नात् त्वदीयञ्च वदनं परिवीक्षितुं।
अहं वहिः समागत्य त्वां साक्षात् पर्य्यवाप्नवम्।

१६ अहं विचित्रवस्त्रेण मिस्रीयसूत्रवस्त्रतः।
स्वकीयां शोभनां शय्यां त्वदर्थं पर्य्यसज्जये।

१७ अगुरुगन्धदारुभ्यां तथा गन्धरसेन च।
अभवत् शयनीयञ्च मदीयं परिवासितं।

१८ आगच्छावां प्रगे यावत् प्रेम्णाप्यायावहै भृशं।
तथा स्वकीयप्रेम्णैव सुखिनौ संभवाव च।

१९ यतः पति मदीयो यः स नैव विद्यते गृहे।
अनेकदूरमार्गेण गमनं कृतवानसौ।

२० मुद्राणाञ्च सहस्राणि समादाय प्रतस्थिवान्।
शुक्ले पक्षे समायाते स निजं गृहमेष्यति।

२१ इत्थं मधुरवाक्यैः सा जहार तस्य मानसम्।
ओष्ठयोः कोमलत्वेन समाकर्षच्च तं जनम्।

२२ तदानीं स पुमान् तस्याः पश्चात् पर्य्यगमत् हठात्।

मीनश्चैवो हतार्थश्च यथैव परिगच्छति।

१३ जालं गत्वा च वाणेन यद्वद्विद्धो यथा मृगः।

अज्ञात्वा स्वस्थितिं पक्षी यथोन्माथं प्रधावति॥

१४ अतो हे बालका यूयं शृणुत वचनं मम।

मदीयवक्त्रवाक्यञ्च युष्माभिः सन्प्रमान्यताम्।

१५ त्वदीयमानसं तस्या मार्गेण नैव गच्छतु।

त्वं तदीयपदव्याञ्च भ्रमणं परिवर्ज्जय।

१६ यतस्तया क्षतीकृत्य बहुलोका निपातिताः।

तथैव बहवो लोका बलवन्तस्तया हताः।

१७ तदीयं भवनं यत् तत् परलोकपथो भवेत्।

स एवान्तर्गृहं मृत्यो र्जनान् प्रत्यवगाहयेत्॥

## ८ अष्टमोऽध्यायः।

१ विद्यायाः सुख्यातिः श्रेयता च १२ विद्यया पराक्रमो धनञ्च
२२ विद्याया अनादित्वं ३२ विद्यया सुखवर्णनञ्च।

१ या विद्या सा समाह्वानं प्राणिनां न करोति किं।

तथा या शेमुषी सा च शोच्चैः शब्दायते न किं।

२ सा पार्श्वे वर्त्मनः प्रोच्चे स्थाने च परितिष्ठति।

शृङ्गाटकपदव्याञ्च समुत्तिष्ठति सा स्वयम्।

३ द्वारेऽर्थतो नगर्य्यास्तु द्वारस्य सम्मुखे स्थिता।

तथा द्वारे प्रवेशस्य निष्क्रान्ति प्रभाषते।

४ हे मानवगणाः सर्व्वे युष्मानहं समाह्वये।

सन्तानेषु मनुष्याणाम् अहमेतन् निवेदये।
५ हे अज्ञा ज्ञानवाक्यन्तु युष्माभिः परिबुध्यतां।
हे निर्बोधाश्च युष्माभि र्बुद्धिवाक्यं प्रबुध्यतां।
६ निशामयत युष्मभ्यं सत्कथां कथयाम्यहम्।
मदीयोष्ठद्वयस्याहम् उपयुक्तं वचो ब्रुवे।
७ मामकीनेन वक्त्रेण तथ्यवाक्यं प्रभाष्यते।
मदीयोष्ठद्वयस्यैव दुष्टता सम्मतीयते।
८ मामकीनस्य वक्त्रस्य धर्म्याः स्युः सकलाः कथाः।
तासां मध्ये न वक्रञ्च विपरीतञ्च नो वचः।
९ सकलाः सुगमास्तस्य शेमुषी यस्य विद्यते।
तथा सर्व्वे यथार्थाः स्यु र्यस्य ज्ञानञ्च विद्यते।
१० मदीयमुपदेशं त्वं दुर्व्वर्णात् संग्रहाण च।
सुवर्णादपि विज्ञानं त्वया सम्यक् प्रगृह्यतां।
११ मुक्तातोपि यतो विद्या सत्तमा परिकीर्त्तिता।
इष्टं वस्त्वस्ति यत् किञ्चित् न तत् सर्व्वं तया समं॥
१२ अह विवेचनामाङ्कं विद्या वासं करोमि च।
अहं विद्या लभे सम्यग् धिषणां धर्म्मभेदिकां।
अहं परेश्वराद् भीत्वा च्छतीयित्वा च दुष्कृतम्।
गर्व्वदौर्म्मुख्यदम्भित्वम्रतीये कुपथन्तथा।
मन्त्रणा मामकीना स्यात् तत्त्वज्ञानञ्च मामकम्।
तथा बुद्धि र्मदीया स्यात् बलञ्च मामकं भवेत्।

राजत्वञ्च प्रकुर्व्वन्ति मत्तएव नराधिपाः ।
तथैव मन्त्रणा मत्तो मन्त्रिभिः सूपदिश्यते ।
अध्यक्षा ये च ते सर्व्वे मत्तएव प्रशासति ।
न्यायकर्म्माणि कुर्व्वन्ति भूपाश्च भूविचारकाः ।
मयि कुर्व्वन्ति ये प्रेम करोमि प्रेम तेष्वहम् ।
गवेषयन्ति ये माम्तु शीघ्रं प्राप्स्यन्ति ते जनाः ।
ऐश्वर्य्यमपि सम्मानम् अक्षयो विभवस्तथा ।
धर्म्मश्चैतानि सर्व्वाणि मदीयानि भवन्ति हि ।
उत्तमं मत्फलं स्वर्णात् सुवर्णादपि निर्म्मलात् ।
तथा रूप्यान् मनोनीता सम्पत्ति मम शोभना ।
अहमेव स्वधर्म्मस्य पद्व्या परियापये ।
विचारस्य च मार्गेण गमनं कारयाम्यहम् ।
कुर्व्वन्ति मयि ये प्रेम मैश्वर्य्यांस्तान् करोम्यहम् ।
भाण्डागारं धनैस्तेषां परिपूर्णं करोम्यहम् ॥

कर्म्मणां परमेशस्य प्रारम्भे च तदादितः ।
कृतानां कर्म्मणां पूर्व्वं प्राप्ताहं तेन चाभवम् ।
अनादिकालतः पृथ्व्या मूलस्य स्थापनादपि ।
पूर्व्वं तेनाभिषिक्ताहं विद्धि श्रीपरमेशिता ।
तथा सरित्पतीनाञ्च सर्व्वेषां सृष्टितः पुरा ।
तोयेन परिपूर्णानां प्रस्रवाणाञ्च पूर्व्वतः ।
पर्व्वतानाञ्च सर्व्वेषां स्थापनं नाभवद् यदा ।

तथोपपर्व्वतानाञ्च जननादपि पूर्व्वतः।
पृथ्वोचित्रोपरिस्थस्य सुद्रेणोरपि नो जनिः।
यदा तत्कालतः पूर्व्वं मदीया प्राभवज्जनिः।
यदा खं स्थापितं तेन तत्राहं स्थितवांस्तदा।
यदा स जलधे सौनं चक्रवत् कृतवान् पुरा।
तथा संस्थापयामास स ऊर्द्धस्थान् वलाहकान्।
एवं सरित्पतीनाञ्च प्रस्रवान् संबबन्ध सः।
उल्लङ्घितुं न शक्नोति यां सीमां जलधे जलं।
अस्थापयत् सतां सीमां मूलञ्चास्थापयत् क्षितेः।
तदा तस्य समीपेऽहं कर्म्म कुर्व्वन् समास्थितः।
आससानन्दितस्तस्य प्रत्यहं जनयन् मुदं।
प्रमोदं कृतवान् पूर्व्वम् अहं धरणिमण्डले।
तथा मनुष्यसन्तानैः महानन्दं चकार च॥

हे सर्व्वे बालकाः यूयं निशामयत मद्वचः।
मदीयायां पदव्यां यो व्रजेद् धन्यः स मानवः।
हितोपदेशमादाय ज्ञानवान् जायते नरः।
किन्तु यूयं न कुर्व्वीध्वमश्रद्धां तत्र जातुचित्।
यो जागर्त्ति मम द्वारे मम वाक्यं शृणोति च।
मम द्वारशिलायां योऽपेक्षते धन्यएव सः।
यतो मामेव संप्राप्य परिप्राप्नोति जीवनं।
तथैव परमेशस्य सम्पुष्टत्वात्यनुग्रहं।

यो मां प्रति चरेत् पापं निजप्राणान् हिनस्ति सः ।
ये जना मास्तीयन्ते प्रेम कुर्व्वन्ति ते मृतौ ॥

## ९ नवमोऽध्यायः ।

१ तत्त्वज्ञानस्याह्वानं ७ उपदेशकथनं १३ अज्ञानतायाः कथनं फलञ्च ।

निजं निकेतनं विद्या स्वयमेव विनिर्म्ममे ।
तथा तस्य तया सप्त स्तम्भा अपि सुनिर्म्मिताः ।
मारयित्वा पशून् स्वीयान् भोज्यमासादयच्च सा ।
ततश्च मिश्रयामास सा सम्यग् गोस्तनीरसं ।
तथा निमन्त्रणं कर्त्तुं निजदासीः प्रहित्य सा ।
उच्चस्थाने नगर्य्याः सा प्रोच्चैरेतत् प्रभाषते
अत्रागच्छन्तु ते लोका ये केचिज् ज्ञानवर्जिताः ।
तेभ्य एतां कथां वच्मि निर्बोधा ये च केचन ।
समागच्छत यूयं मे भोज्यं भुङ्ग्ध्वमेव च ।
तथा प्रमादितञ्चेमं पिवेत गोस्तनीरसं ।
बोद्धाया ज्ञानमङ्गञ्च जीवनं परिरक्षत ।
तथा ज्ञानस्य मार्गेण यूयं गच्छत सर्व्वदा ॥
लज्जां स एव प्राप्नुयान् निन्दकं भर्त्सयेत यः ।
दुर्जना भर्त्स्यते येन दुश्चिह्नं तेन प्राप्यते ।
अतस्त्वं निन्दकं नैव भर्त्सयेथाः कदाचन ।
मा चेत् स निन्दको लोक ऋतीयां ते करिष्यति ।

९ ज्ञानिनं भर्तृमयस्व त्वं तेन स त्वयि प्रेष्यते।
सल्लोके शिक्षिते तस्य ज्ञानवृद्धि र्भविष्यति।

१० ज्ञानस्यारम्भकं तत् स्याद् यद्भयं परमेश्वरात्।
एवं धर्म्मस्य यज्ज्ञानं तज्ज्ञानं परमं मतम्।

११ यतस्तवायुषो वृद्धि र्मत्तएव भविष्यति।
तवायुर्वत्सराणाञ्च परिवृद्धि र्भविष्यति।

१२ प्राप्ते मति त्वया ज्ञाने स्वयं तदुपलप्स्यसे।
निन्दिते च त्वया तस्मिन् भोक्ष्यसे स्वयमेव तत्।

१३ अज्ञाना या भवेद् योषित् सा स्यात् कलहकारिणी।
बुद्धिहीना च या नारी सा विवेकविवर्जिता।

१४ स्वकीयभवनद्वारे त्विस्ताथ्यासनमेव सा।
प्रोच्चस्थाने नगर्य्याः सा स्वासने सूपविश्य च।

१५ ये पान्था ऋजुमार्गेण कुर्व्वन्ति गमनं स्वयम्।
तानेव पथिकाल्लोकान् समाह्वयेति भाषते।

१६ अत्रागच्छन्तु ते लोका ये केचिज् ज्ञानवर्जिताः।
तेभ्य एतां कथां वच्मि निर्बोधा ये च केचन।

१७ चोरिताम्भो मधुरमिष्टं सुस्वादु गुप्तभक्षितम्।
किन्तु सन्तिष्ठते प्रेतो यत् तदीयनिकेतने।

१८ यच्च पातालगम्भीरं प्रयान्ति तन्निमन्त्रिताः।
तदेतै र्मानवै र्नैव किञ्चित्तु प्रविविच्यते॥

---

## १० दशमोऽध्यायः।

### १ सुलेमनो नानाविधहितोपदेशाः।

१ आनन्दजनकः पुत्रो भवति ज्ञानवान् पितुः।
किन्तु मूर्खसुतो मातुर्भवति शोककारकः।

२ वित्ते दुष्टतया प्राप्ते फलं किञ्चिन् न विद्यते।
किन्तु धर्म्मात् परित्राणं मनुष्याणां प्रजायते।

३ क्षुधा व्याकुलयेन् नैव धार्म्मिकान् परमेश्वरः।
किन्तु पापवतां लोभं करोति स तु निष्फलं।

४ आलस्यात् कर्म्मकर्त्ता यः स प्राप्नोति दरिद्रताम्।
त्वरया कर्म्मकर्त्तारं करोति धनिनं करः।

५ सञ्चयेद् ग्रीष्मकाले यः स एव बुद्धिमान् सुतः।
संत्रपाजनकः पुत्रो निद्रावान् शस्यकर्त्तने।

६ आशीर्व्वाद् धर्म्मयुक्तानां सदा शिरसि तिष्ठति।
किन्तु दौरात्म्यसंच्छन्नं तिष्ठेद् वक्त्रं दुरात्मनाम्।

७ स्मर्य्यं धार्म्मिकलोकानां नाम धन्यं प्रजायते।
किन्तु दुष्टमनुष्याणां नामानि यान्ति लुप्तताम्।

८ निदेशं परिगृह्णाति ज्ञानवानेव मानवः।
किन्त्वज्ञानस्य वाचालो मानवः पतितो भवेत्।

९ यो जनः सरलं गन्ता निर्भयं स प्रगच्छति।
वक्रगामी भवेद् यस्तु स मनुष्यः प्रशिक्ष्यते।

१० इङ्गितयति नेत्राभ्यां यः स दुःखानि यच्छति।

किन्त्वज्ञानस्य वाचालो मानुषः पतितो भवेत्।

११ वक्त्रं धार्म्मिकलोकानां भवेज्जीवनप्रस्रवः।

किन्तु दौरात्म्यसंच्छन्नं तिष्ठेत् पापवतां मुखं।

१२ उपस्थापयति द्वेषो यः स एव विरोधकं।

किन्तु यत् प्रेम सर्व्वाणि पापान्याच्छादयेद्धि तत्।

१३ ज्ञानवान् मानवो यः स्यात् ज्ञानं तिष्ठति तन्मुखे।

किन्तु बालिशपृष्ठाय दण्ड एव विराजते।

१४ यो ज्ञानवान् मनुष्यः स ज्ञानं सञ्चिनुयात् सदा।

किन्त्वज्ञानस्य वक्त्रेण विनाशः परिजन्यते।

१५ भवेद् वित्तवतां वित्तं स्वकीयगाढपत्तनम्।

दुर्गतानां मनुष्याणां दारिद्र्यं स्याद् विनाशकम्।

१६ धार्म्मिकानां य आचारस्तत् स्याज्जीवनकारणम्।

किन्तु पापवतां सम्पद् भवेत् कलुषकारणम्।

१७ हितोपदेशमन्ता यः स याति जीवने पथि।

किन्तु स मानवो भ्रान्तो भर्त्सनं यो न मन्यते।

१८ द्वेष आच्छाद्यते येन मिथ्यावादी स मानुषः।

यः करोत्यपवादं स उच्यते बालिशो जनः।

१९ उक्तेषु बहुवाक्येषु पापाभावो न विद्यते।

अतः स बुद्धिमान् लोको यो निजौष्ठौ नियच्छति।

२० जिह्वा धार्म्मिकलोकानां भवेन् निर्म्मलरूप्यवत्।

किन्तु पातकिलोकानाम् अल्पमूल्यं मनो भवेत्।

२१ जिह्वा धार्म्मिकलोकानाम् अनेकान् परिभोजयेत्।
किन्तु पातकिनो लोका ज्ञानाभावात् त्यजन्त्यसून्।
२२ आशीर्या परमेशीया सा कुर्य्याद् धनिनं नरं।
स तेन सह नो दुःखमुपस्थापयति क्वचित्॥
२३ अज्ञानो मानुषो यः स दुष्कर्म्मण्यभिनन्दति।
विद्या भवति तस्यैव यो नरो बुद्धिमान् भवेत्।
२४ यस्माद् बिभेति पापात्मा घटते तत्तु तम्प्रति।
किन्तु धर्म्मवतां पुंसामिष्टलाभोऽभिजायते।
२५ झञ्झानिलो यथा याति तथा पाप्यपि गच्छति।
किन्तु धर्म्मवतां पुंसां कुड्यमूलं चिरन्तनम्।
२६ यथैवाम्लरसो दन्ते यथा धूमश्च नेत्रयोः।
तथालसजनः स्वस्य प्रेरकाय प्रजायते।
२७ परेशात् साध्वसं यत् स्यात् तदेवायुः प्रवर्द्धयेत्।
किन्तु पापिमनुष्याणां वर्षं न्यूनं करिष्यते।
२८ धार्म्मिकानां मनुष्याणाम् अपेक्षानन्ददायिका।
किन्तु पापिमनुष्याणां प्रत्याशा क्षयमाप्नुयात्।
२९ यः पन्थाः परमेशस्य साधूनां दुर्गमेव तत्।
किन्तु दुष्कर्म्मिलोकानां विनाश उपजायते।
३० धार्म्मिको मानवो नैव कदापि विचलिष्यति।
किन्तु पापिमनुष्या ये देशे वत्स्यन्ति नैव ते।
३१ धार्म्मिकलोकवक्त्रेभ्यो ज्ञानमेव प्रजायते।

किन्तु सा क्रियते या स्याद् रसना वक्रवादिनी।
३२ कृतोपकारमन्तारो भवन्ति धार्म्मिकाधराः।
किन्तु वक्रकथां वक्ति वदनं पापिनां नृणाम्॥

## ११ एकादशोऽध्यायः।

### १ नानोपदेशकथनम्।

१ अन्याय्या या तुला लोके सा घृणा परमेशितुः।
परिमाणन्तु यन्न्याय्यं स तत्र परितुष्यति।
२ अहङ्कारे समायाते समायाति त्रपापि च।
किन्तु ज्ञानं समाप्नोति मानवो नम्रमानसः।
३ तेषां मार्गम् ऋजुं कुर्य्याद् सुकृतं साधुचेतसाम्।
किन्तु पापी जनः स्वीये कलुषे पतितो भवेत्।
४ क्रोधस्य दिवसे वित्तं निष्फलं संप्रजायते।
किन्तु मृत्युसकाशाच्च धर्म्मो रचति धार्म्मिकम्।
५ करोति साधुता साधोः पदवीं सरलां सदा।
किन्तु दुष्टजनस्तस्य दुष्टत्वेन निपात्यते।
६ धर्म्मः सरललोकानां समुद्धरति तान् सदा।
किन्तु स्वकीयलोभेन भ्रियन्ते लङ्घिताज्ञकाः।
७ प्रत्याशा म्रियते तस्य मृते पापिनि मानुषे।
एवं विनाशमाप्नोति प्रत्याशा बलिनां नृणाम्।
८ धार्म्मिको मानवो यः स्यात् स दुःखादुद्धृतो भवेत्।
किन्तु तस्य स्थले पापी जनः समुपतिष्ठति।

९ स्वास्यदोषान्निजं बन्धुं काल्पनिको विनाशयेत्।
किन्तु धार्म्मिकलोकस्तं ज्ञानेनैव समुद्धरेत्।
१० धार्म्मिकानां शुभे जात आनन्दो जायते पुरे।
किन्तु पातकिलोकानां विनाशे स्याज्जयध्वनिः।
११ आशीर्व्वाक्याद् ऋजूनान्तु नगरस्योन्नति र्भवेत्।
किन्तु पापिजनस्यास्यात् तदधःपतनं भवेत्।
१२ तुच्छीकरोति निर्बोधः स्वकीयमपि बान्धवम्।
किन्तु प्रज्ञाविशिष्टो यः स मौनीभूय तिष्ठति
१३ पराधिकारचर्च्ची यो भ्रमन् गुप्तं व्यनक्ति सः।
किन्तु विश्वास्यलोको यो गोपायति वचांसि सः।
१४ मन्त्रणारहितस्थाने मानवः पतितो भवेत्
किन्तु मन्त्रिवहुत्वेन लोकानां रक्षणं भवेत्।
१५ लग्नको ऽज्ञातलोकस्य यः स क्लेशं समाप्नुयात्।
प्रतिभूत्वघृणावान् यः स विपद्रहितो भवेत्।
१६ स्वापतेयानि रक्षन्ते पुंसा बलवता यथा।
तथैव सुन्दरी नारी सम्मानं परिरक्षति।
१७ मङ्गलं स्वीयप्राणानां करोति कृपया युतः।
किन्तु देहस्य दुःखानि घटयेन् निर्दयो नरः।
१८ स करोति वृथा कर्म्म यः स्यात् कलुषवान् नरः।
किन्तु सत्यं फलं तस्य यो धर्म्मबीजवापकः।
१९ धर्म्मेण जीवनं यद्वन् मानवैः परिलभ्यते।

तद्वत् कुकर्म्मणा लोके मरणं प्रतिलभ्यते

२० स परेषामृणापात्रं य: स्यात् कुटिलमानस:।
किन्तु सन्तोषकारा: स्यु ऋजुमार्गेण गामिन:।
२१ पुरुषानुक्रमं यावत् पापी दण्डान् न मोक्ष्यते।
किन्तु धार्म्मिकलोकानां वंश उद्धारयिष्यते।
२२ यथा शूकरनासायां हाटकस्य विभूषणम्।
अविवेचनयुक्तायां सौन्दर्य्यञ्च तथा स्त्रियाम्।
२३ उत्तमं परिवाञ्छन्ति केवलं धार्म्मिका नरा:।
किन्तु कोपं प्रतीच्छन्ति सदा किल्विषिणो जना:।
२४ मानवा: परिवर्द्धन्ते दानं कृत्वापि केचन।
सञ्चित्यान्यायत: केचित् प्राप्नुवन्ति दरिद्रताम्।
२५ जन्मिनो दानशीला ये परिहृष्टा भवन्ति ते।
पानीयसेचको य: स्यात् स पानीयेन सिच्यते।
२६ शस्यं बद्ध्वा निधत्ते य: शपन्ति तं जनं जना:।
किन्तु विक्रीयते येनाशिष: स्यु स्तस्य मूर्द्धनि।
२७ मङ्गलं चेष्टते येनानुग्रहस्तेन प्राप्यते।
य: परस्य क्षतिं वाञ्छेत् सा क्षतिस्तस्य जायते।
२८ यो विश्वसिति वित्ते स्वे स जन: पतितो भवेत्।
स शाखेव प्रफुल्ल: स्याद् धर्म्मवान् यस्तु मानव:।
२९ क्लिश्नाति परिवारान् य: सोऽधिकुर्य्यात् प्रभञ्जनं।
अज्ञानी मानुष: कुर्य्याद् दासतां धिषणावत:।

३० फलमस्त्यमृतवृक्षस्य धार्म्मिकस्य फलं भवेत् ।
आत्मा संचारयते येन सएव ज्ञानवान् नरः ।
३१ स्वस्वकर्म्मफलं भूम्यां धार्म्मिकै र्यदि लभ्यते ।
तदा कलुषिभि र्दुष्टैः किं नैव परिलभ्यते ॥

## १२ द्वादशोऽध्यायः ।

१ प्रीयते सूपदेशे यः स ज्ञानेऽपि सुप्रीयते ।
किन्तु स पशुवल्लोको भर्त्सनं य ऋतीयते ।
२ परेशः साधुलोकेषु करोति सन्ततं कृपाम् ।
किन्तु कुत्सितसन्धानं करोति दोषिणं नरम् ।
३ स्थिरः स्थातुं न शक्नोति पापेन कोऽपि मानवः ।
किन्तु धार्म्मिकलोकस्य मूलं तिष्ठेत् सुनिश्चलम्
४ नारी गुणवती पत्युः किरीटसदृशी भवेत् ।
किन्तु व्रीडादायिनी योषित् तदस्थ्नां क्लेदवद् भवेत् ।
५ सत्यो भवति सङ्कल्पो नराणां धर्म्मचारिणाम् ।
किन्तु पातकिलोकानां मृषा भवति मन्त्रणा ।
६ पापिवर्गः रक्तं गुप्तं हन्तुं वाक्यं प्रभाषते ।
किन्तु सरलचित्तानां जिह्वा तान् परिरक्षति ।
७ पतन्त्यधो दुरात्मानः स्थिरा स्तिष्ठन्ति नैव ते ।
किन्तु धार्म्मिकलोकानामचलं वेश्म तिष्ठति ।
८ विज्ञानेन स्वकीयेन विख्यातो मानवो भवेत् ।
किन्तु तुच्छीक्रियन्ते ते ये स्युः कुटिलमानसाः ।

९ करोति निजदासत्वं यः साधारणमानुषः।
स श्लाघाकारिणो लोकाद् अन्यहीनाद् वरो भवेत्।
१० स्वपशोरपि प्राणेषु करोति धार्म्मिकः कृपाम्।
किन्तु पापिमनुष्याणां स्नेहो निष्ठुरतां व्रजेत्।
११ तृप्तिं गच्छति अन्नेन भूम्याः कृषकमानुषः।
यत् कर्म्म निष्फलं तत्र निर्बोधः सम्प्रवर्त्तते।
१२ यद् दुर्गं दुष्टलोकानां तत् प्रलुभति पातकी।
किन्तु धार्म्मिकलोकानां मूलमुत्पादयेत् फलम्।
१३ स्वकीयाधरदोषेण पातकी पतितो भवेत्।
किन्तु यो धार्म्मिको लोकः स दुःखादुद्धृतो भवेत्।
१४ स्ववक्त्रवाक्यत स्तृप्तो मङ्गलेन भवेन् नरः।
स्वीयहस्तक्रियायाश्च फलं तं प्रति जायते।
१५ अज्ञानस्य मनुष्यस्य वर्त्म तद् दृष्टितः शुभम्।
शृणोति मन्त्रणां यस्तु सएव ज्ञानवान् नरः।
१६ क्रोधोऽज्ञानमनुष्यस्य व्यक्तीभवति सत्वरं।
किन्तु विज्ञजनः स्वीयम् अपमानं प्रगोपयेत्।
१७ प्रकाशयति धर्म्मं स यः सत्यं वक्ति मानवः।
किन्तु प्रवञ्चनामेव मिथ्यासाक्षी प्रकाशयेत्।
१८ वाचालस्य मनुष्यस्य शस्त्राघातसमं वचः।
किन्तु ज्ञानवतो जिह्वा निरामयसमा भवेत्।
१९ सत्यवादिमनुष्यस्याधरौ स्यातां चिरन्तनौ।

लणं संस्थायिनी जिह्वा जनस्यातथ्यभाषिणः।
१० कुचिन्ताकारिणां चित्ते संतिष्ठति प्रतारणा।
किन्तु शान्तेः परामर्शं यो दद्यात् सोऽभिनन्दति।
११ धार्म्मिकस्य मनुष्यस्य विपत् कापि न जायते।
यो दुष्टोमानव स्तन्तु परियमति दुर्गतिः।
१२ ऋतीयते परेशस्तौ यौ मृषावादकाधरौ।
किन्तु सत्यक्रियाकारी तस्य सन्तोषकारकः।
१३ परिणामप्रदर्शी यो ज्ञानं संवृणुते स हि।
किन्त्वज्ञतां प्रकाशन्ति मनांस्यज्ञानिनां नृणाम्।
१४ आधिपत्यं प्रकुर्व्वीते कर्म्मशीलवतः करौ।
किन्तु यः शीतको लोकः स ददाति सदा करं।
१५ क्लेशान् मानसिकादेव नतो भवति मानवः।
किन्तु शान्तिप्रदं वाक्यं तं नरं परिहर्षयेत्।
१६ समीपवासिलोकेषु भवेद् धार्म्मिक उत्तमः।
किन्तु पापवतां मार्गः स्यात् तेषां भ्रान्तिकारकः।
१७ अलसो न पचेद् वस्तु स्वहस्तेनापि संधृतम्।
किन्तु वित्तं महार्घं स्यात् कर्म्मशीलजनस्य हि।
१८ धर्म्मस्य पदवीमध्ये जीवनं परिलभ्यते।
तस्य मध्ये कदाचित्तु मरणं नहि विद्यते॥

---

## १३ त्रयोदशोऽध्यायः ।

१ उपदेशं पितुः पुत्रो ज्ञानवान् संनिशामयेत् ।
किन्तु यो निन्दकः पुत्रो भर्त्सनं न शृणोति सः ।

२ वदनस्य गुणात् लोक उत्तमं वस्तु भक्षति ।
किन्तु प्रवञ्चकप्राणा दौरात्म्यं परिभुञ्जते ।

३ यो रक्षति निजं वक्त्रं स प्राणानपि रक्षति ।
यस्तु विस्तारयेदोष्ठौ स मनुष्यो विनश्यति ।

४ स इच्छन्नपि नाप्नोति यः स्यादलसमानुषः ।
कर्म्मशीलो मनुष्यो यः स सदानन्दमाप्नुयात् ।

५ ऋतीयते मृषावाक्यं धर्म्मवानेव मानवः ।
किन्तु लज्जापमाने द्वे जनयेत् पातकी नरः ।

६ धर्म्ममार्गेण गन्तारं नरं धर्म्मोऽभिरक्षति ।
किन्तु पातकिनं लोकं पापमेव विनाशयेत् ।

७ अकिञ्चनोपि कुर्य्यात् स्वं धनिनं कोपि मानवः ।
धनवानपि कुर्य्यात् स्वं दरिद्रं कोपि मानुषः ।

८ संरक्षति निजप्राणान् धनेन धनवान् नरः ।
किन्तु दुर्गतलोको न भर्त्सनं परिमन्यते ।

९ धार्म्मिकस्य मनुष्यस्य दीप्तिरुज्ज्वलतां व्रजेत् ।
पापयुक्तमनुष्यस्य दीपो निर्व्वाणतामियात् ।

१० विवादो जायते लोके केवलादभिमानतः ।
किन्तु संविद्यते ज्ञानं मन्त्रणाग्राहिणां नृणाम् ।

१ निमेषादेव वित्तानि क्षीणतामुपयान्ति हि।
क्रमशः सञ्चयेद् यस्तु तदीयं धनमेधते ।
२ आशासिद्धौ विलम्बन्तु मानसाधिससं भवेत्।
किन्तु वाञ्छितसंप्राप्तिः सुधारसमसा भवेत्।
३ अवाप्नोति विनाशं स आज्ञां तुच्छीकरोति यः।
किन्त्वाज्ञा मान्यते येन तेन शान्तिरवाप्यते।
४ उन्माथान् मृत्युकूपाच्च समुद्धरणकारणम्।
ज्ञानवतां व्यवस्था स्यात् पीयूषप्रस्रवोपमा।
५ अनुग्रहमवाप्नोति सुबोध एव मानवः।
किन्तु प्रवञ्चकानां हि पदवी कठिना भवेत्।
६ कर्म्माणि कुरुते विद्वान् विविच्य सकलो नरः।
किन्तु प्रकाशयेत् मूर्खो लोकः स्वकीयमूर्खताम्।
७ स एव दुष्टदूतः स्याद् विपद्ग्रस्तं करोति यः।
यो दूतः सत्यवादी स आरोग्येन समो भवेत्।
८ तुच्छयेदुपदेशं यो दरिद्राति च लज्जते।
किन्तु भर्त्सनमन्ता यः स प्राप्नोति समादरम्।
९ आशायाः परिपूर्णत्वं मनोमिष्टत्वबोधकम्।
किन्तु दोषं परित्यक्तुम् अज्ञस्य जायते घृणा।
१० मानवो ज्ञानिनां सङ्गात् ज्ञानवानेव जायते।
किन्तु वैधेयबन्धुः सन् विनाशमुपगच्छति।
११ आपत् पातकिलोकानां पश्चात् पश्चात् प्रगच्छति।

किन्तु धार्म्मिकलोकेभ्यो मङ्गलं परिदीयते।

२२ साधु लोकः सुतादिभ्यः स्वाधिकारं प्रयच्छति।

धनं धार्म्मिकलोकेभ्यः पापिभिः सञ्चितं भवेत्।

२३ दरिद्रकर्षणादेव बहु शस्यं प्रजायते।

किन्तु कस्यापि तद्धानि विचाराभावतो भवेत्।

२४ न्याय्यं दण्डं न कुर्य्याद् यः स पुत्रं समृतीयते।

किन्तु यः प्रीयते पुत्रे सोऽविलम्बं प्रशास्ति तम्।

२५ धार्म्मिकास्तृप्तिपर्य्यन्तं प्रत्यहं परिभुञ्जते।

किन्तु पापिमनुष्याणाम् उदरे तिष्ठति क्षुधा।

## १४ चतुर्दशोऽध्यायः।

१ नारी ज्ञानवती या सा निर्म्माति सदनं निजम्।

किन्त्वज्ञाना भवेद् या सा स्वहस्ताभ्यां भनक्ति तत्।

२ य आचरति सारल्यं परमेशाद् बिभेति सः।

किन्तु तुच्छं प्रकुर्य्यात् तं यो विमार्गेण गच्छति।

३ अज्ञानिनामहङ्काराद् दण्डस्तिष्ठति तन्मुखे।

किन्तु ज्ञानवतामोष्ठौ स्वानेव परिरक्षतः।

४ गवामभावतो गोष्ठं तिष्ठत्येव परिष्कृतम्।

किन्तु गवां बलाद् भूरिधनवृद्धिः प्रजायते।

५ यः साक्षी सत्यवादी स्यात् सोऽतथ्यं कथयेन्न हि।

किन्तु योऽतथ्यवादी स्यात् सोऽतथ्यं कथयेद् ध्रुवं।

६ चेष्टमानोऽपि नाप्नोति ज्ञानं निन्दकमानवः।

किन्तु ये बुद्धिमन्तस्ते सुतरां प्राप्नुवन्ति तत् ।
ज्ञानयुक्ताध्वगो यस्य लोकस्य नैव पश्यसि ।
यस्माज्ज्ञानस्तयोरेव समोपाद् याहि दूरतः ।
ज्ञानेन बुद्धिमाल्लोकः स्वकीयं वर्त्म बुध्यते ।
किन्त्वज्ञानतयाज्ञाना जनाः स्वान् भ्रमयन्ति च ।
पापेन सह कुर्व्वन्ति कुतुकं पापिनो जनाः ।
किन्तु धार्म्मिकलोकानां मध्ये तिष्ठत्यनुग्रहः ।
अन्तःकरणमात्मीयं तिक्तत्वं परिबुध्यते ।
अन्यैः कैश्चित् सुखं तस्य भोक्तुं नैव प्रशक्यते ।
पापयुक्तमनुष्याणां भवनं परिनश्यति ।
धार्म्मिकानां मनुष्याणां श्रीमद् भवति मन्दिरं ।
कोऽपि मार्गो मनुष्येण शोभनः परिबुध्यते ।
किन्तु तस्यैव जायेत चरमे मरणायनम् ।
कदाचिद्धर्षकालेऽपि मनोदुःखं प्रजायते ।
तस्यानन्दस्य शेषे हि विषण्णत्वं प्रजायते ।
चित्ते विपथगः पूर्णः स्वीयाचारफलै र्भवेत् ।
किन्तु स्वस्माद् भवेत् तृप्तः साधुरेव हि मानवः ।
अविज्ञो मानवो यः स सर्व्ववाक्येषु प्रत्ययी ।
किन्तु विज्ञजनः स्वीयम् आचारं संविचारयेत् ।
ज्ञानिलोको भयं कृत्वा पातकाद् विमुखो भवेत् ।
किन्त्वज्ञानोऽभिमानी स्यान् निर्भयश्च प्रजायते ।

१७ अज्ञानकर्म्म कुर्य्यात् स योऽकस्मात् परिकुप्यति।
ऋतीयाभाजनं स स्यात् यः करोति कुमन्त्रणाम्।

१८ अज्ञानकर्मविज्ञो यः सोऽधिकारं समाप्नुयात्।
किन्तु विज्ञो भवेज् ज्ञानकिरीटेन विभूषितः।

१९ निर्दोषस्य समीपे तु नम्रोभवति दोषवान्।
किल्विषी धार्म्मिकद्वारि नम्रोभवति मानुषः।

२० यो दारिद्र्ययुतो लोकः स्वबन्धोरपि सोऽप्रियः।
किन्तु वित्तविशिष्टस्य भवन्ति बहुबन्धवः।

२१ तुच्छीकरोति मित्रं यः कलुषाणि करोति सः।
दरिद्रान् दयते यस्तु कुशलं तस्य जायते।

२२ ते किं भ्रान्ता न ये लोका रचयन्ति प्रवञ्चनम्।
तेषां दया च सत्यत्वं ये जना मन्त्रयन्ति सत्।

२३ सर्व्वविधश्रमाणाञ्च फलं हि परिविद्यते।
किन्तु वाचालतायां वै दारिद्र्यं परिविद्यते।

२४ सज्ञानानां मनुष्याणां वित्तं मुकुटमुच्यते।
किन्तु बालिशलोकानां बालिशत्वेऽधिकारिता।

२५ सत्यभाषी तु यः साक्षी निजप्राणान् स रक्षति।
किन्तु साक्षी मृषाभाषी प्रब्रवीति मृषावचः।

२६ साहसो जायते तेषां ये बिभ्यति परेश्वरात्।
स आश्रयो भवेत् तेषां तत्सन्तानगणस्य च।

२७ यो मृत्युरूप उत्साद्य स्तस्मात्तरणकारणं।

परैश्वर्याद् भयं यत् स्यात् तद्धि जीवनप्रस्रवः।
प्रजानां सति वाञ्छल्ये सम्मानं भूपते र्भवेत्।
किन्तु राज्ञः प्रजाभावे हानिरेवाभिजायते।
यस्तु क्रोधे भवेद् धीरो महाज्ञानी स मानवः।
किन्तु यश्चञ्चलः कोपे मौर्ख्यं नित्यं प्रकाशयेत्।
स्वस्थं मनः शरीरस्य जीवनेन समं भवेत्।
किन्त्वीर्ष्या तु मनुष्याणामस्थिक्लेदसमा भवेत्।
उपद्रावी दरिद्रस्य तत्स्रष्टारं न मन्यते।
किन्तु यो दयते दीनं तत्सम्मानं करोति सः।
[illegible]रोभवति पापेन निजेन पातकी नरः।
[illegible]कन्त्वस्ति धर्म्मिलोकस्य प्रत्याशा मरणेऽपि च।
[illegible]णां ज्ञानवतां विद्या हृदये परितिष्ठति।
[illegible]कन्त्वज्ञानमनुष्याणां मध्ये गर्व्वः प्रकाशते।
[illegible]र्म्मो मानुषजातीनां प्रकरोति सुगौरवम्।
[illegible]कन्त्वधर्म्मो मनुष्याणाम् अपमानकरो भवेत्।
[illegible]प्नोति बुद्धिमान् भृत्योऽनुग्रहं पृथिवीपतेः।
[illegible]कन्तु लज्जाप्रदस्तस्य कोपस्य भाजनं भवेत्॥

१५ पञ्चदशोऽध्यायः।

उत्तरं कोमलं नृणां क्रोधसंवारकं भवेत्।
[illegible]कन्तु यत् कठिनं वाक्यं तत् क्रोधजनकं भवेत्।
[illegible]मतो रसना ज्ञानम् उत्तमं संप्रकाशयेत्।

किन्त्वज्ञानस्य यद्वक्ती तदज्ञानं समुद्गिरेत् ।

१ लोचनं परमेशीये स्थाने सर्व्वत्र तिष्ठतः ।

अधमान् उत्तमांश्चैव मनुष्यान् ते प्रपश्यतः ।

४ समा पीयूषवृक्षेण जिह्वा मेलनकारिणी ।

विनाशिका यथा झञ्झा तथा जिह्वा विरोधिनी ।

५ उपदेशं पितुस्तुच्छं करोत्यज्ञानमानवः ।

किन्तु स बुद्धिमान् लोको भर्त्सनं येन मन्यते ।

६ बहुवित्तानि तिष्ठन्ति धार्म्मिकस्य निकेतने ।

किन्तु पापिनृणां क्लेशः सम्पत्तौ परितिष्ठति ।

७ अधरैर्ज्ञानिलोकानां ज्ञानमेव प्रकाश्यते ।

किन्त्वन्तःकरणं नित्यमज्ञस्य चञ्चलं भवेत् ।

८ पापिनां बलिदानानि परमेश ऋतीयते ।

किन्तु सन्तोषिका तस्य प्रार्थना सरलात्मनाम् ।

९ पन्थानं पापिलोकानां परमेश ऋतीयते ।

किन्तु धर्म्मानुरक्ति र्यस्तस्मिन् प्रेम करोति सः ।

१० भविता दुःखदा शास्ति र्नरं विपथगं प्रति ।

मरिष्यति मनुष्यः स भर्त्सनं य ऋतीयते ।

११ नरकं परलोकश्च चेदीशगोचरीभवेत् ।

तर्हि किं मरत्नूनां मनो न गोचरीभवेत् ।

१२ निन्दकः प्रीयते नैव नरे भर्त्सनकारिणि ।

तथा ज्ञानिजनैः सार्द्धं न करोति गमागमौ ।

प्रफुल्लं वदनं कुर्य्यात् आनन्दसहितं मनः ।
किन्तु मानसदुःखात् स्याद् आत्मनः प्रविषण्णता ।
यो बुद्धिमान् नरस्तस्य मनो ज्ञानं गवेषयेत् ।
अज्ञानिनां नृणामास्यैरज्ञता परिभुज्यते ।
जायते दुःखिलोकानां दुःखदं सकलं दिनम् ।
किन्तु हृष्टं मनो नित्यं भोज्येन सदृशं भवेत् ।
स्वापतेयात् प्रभूताच्च चिन्तया सहितादपि ।
ईश्वराद् यद् भयं तेन युक्तमल्पं धनं वरम् ।
न वरं यत्र विद्वेषः पुष्टगोरपि भोजनं ।
विद्यते यत्र संप्रीति वरं शाकस्य भोजनं ।
अमर्षेण समायुक्तो विरोधं जनयेन् नरः ।
क्रोधे धीरो मनुष्यस्तु विरोधशान्तिकारकः ।
पन्था अलसलोकस्य कण्टकावृतमार्गवत् ।
किन्तु धार्म्मिकलोकस्य पन्था राजपथोपमः ।
ज्ञानवानेव पुत्रः स्यात् पितुरानन्दकारकः ।
किन्तु तुच्छीकरोति स्वां जननीमज्ञ आत्मजः ।
अज्ञानले महानन्दं करोति मूढमानवः ।
ऋजुमार्गेण संयाति शेमुषीसहितोनरः ।
सन्मन्त्रणामृते नैव कल्पना परिसिद्ध्यति ।
किन्त्वमात्यैरनेकैः सा सुसम्पन्ना प्रजायते ।
आनन्दं लभते मर्त्यः स्वकीयवदनान्तरात् ।

काले समुचिते कीदृग् उत्तमं योग्यमुत्तरम्।

२४ धिषणायुक्तलोकानां जीवनाध्वोपरिस्थितः
अधः स्थिताय संयान्ति नरकाय न ते जनाः।

२५ गेहं गर्व्वितां नृणां नाशयेत् परमेश्वरः।
किन्तु सीमा स्थिरा तेन विधवानां निधीयते।

२६ दुष्टस्य कल्पना तस्य सन्निधौ स्याद् घृणास्पदं।
किन्तु शुद्धा कथा तस्य समीपे स्यान् मनोहरा।

२७ स्वकीयपरिवारांश्च क्लिश्नाति लोभिमानवः।
किन्तु जीवति लोकः स उत्कोचं य ऋतीयते।

२८ चिन्तयेदुत्तरं दातुं धार्म्मिकलोकमानसम्।
किन्तु पातकिलोकास्यं दुष्टवाक्यं निसारयेत्।

२९ विदूरे पापिलोकेभ्यः संतिष्ठत् परमेश्वरः।
किन्तु धार्म्मिकलोकानां प्रार्थनां प्रशृणोति सः।

३० या स्याल्लोचनयो र्दीप्तिः सानन्दयति मानसम्।
सुसंवादो मनुष्याणामस्थीनि परिपुष्यति।

३१ कर्णाभ्यां श्रूयते याभ्यां भर्त्सनं जीवनप्रदम्।
तावेव ज्ञानिलोकानां मध्यस्थाने सुतिष्ठतः।

३२ यः शास्तिं नैव गृह्णाति प्राणांस्तुच्छान् करोति सः।
किन्तु बुद्धिं स आप्नोति भर्त्सनं संशृणोति यः।

३३ ज्ञानोपदेशकं तत्स्यात् यद् भयं परमेश्वरात्।
एवमुन्नतितः पूर्व्वं नम्रता जायते नृणाम्॥

## १६ षोडशोऽध्यायः।

१ मानसं यन् मनुष्याणां तद् भवेत् परमेश्वरात्।
उत्तरं यद् रसज्ञायास्तच्च स्यात् परमेश्वरात्।

२ सर्व्वे मार्गा मनुष्याणां स्वस्वदृष्टौ परिष्कृताः।
किन्त्वात्मनः परेशो हि करोति सुपरीक्षणम्।

३ त्वं स्वकीयानि कार्य्याणि परमेशे समर्पय।
तेनैव त्वदभिप्रायः स्वयं सिद्धो भविष्यति।

४ स्वाभिप्रायप्रसिद्ध्यर्थं परेशः सृष्टवान् जगत्।
सुतरां पापिनो लोकान् दुर्दशार्थं ससर्ज सः।

५ ऋतीयते परेशस्य मानसं पापिनं जनम्।
केनापि च प्रकारेण न स दण्डाद् विमोक्ष्यते।

६ दयायाः सत्यतायाश्च पापस्य मोचनं भवेत्।
त्यजन्ति कुक्रियां लोकाः परमेश्वरसाध्वसात्।

७ नृणां गतिः परेशस्य यदि स्यात् तोषकारिणी।
तदा तस्य रिपून् तेन सह संमेलयेत् स हि।

८ अन्यायसहितं वित्तं प्रभूतञ्च वरं नहि।
यद्धनं धर्म्मसंयुक्तं तदल्पञ्च वरं भवेत्।

९ मनुष्यस्य मनः स्वीयं पन्थानं परिचिन्तयेत्।
किन्तु निरूपयत्येव तद्गतिं परमेश्वरः।

१० दिव्या वाणी सदा तिष्ठेदोष्ठयोः पृथिवीपतेः
विचारसमये तस्य वक्त्रे भ्रान्तिर्न जायते।

११ न्याय्यं मानं तुला चैव परमेश्वरनिर्म्मितम्।
यानि संपुटकस्थानि मानानि तत्कृतानि हि।

१२ सिंहासनं स्थिरं तिष्ठेद् यतो धर्म्मेण कर्म्मणा।
दुष्कर्म्माणि ततो राज्ञां घृणार्हाणि भवन्ति हि।

१३ राजानः परितुष्यन्ति धर्म्मयुक्ताधरे नृणाम्।
सत्यं वदन्ति ये लोकाः प्रीतिं कुर्व्वन्ति तेषु ते।

१४ सदृशो मृत्युदूतेन स्यात् क्रोधः पृथिवीपतेः।
किन्तु ज्ञानवता पुंसा तस्य शान्तिर्विधीयते।

१५ जीवनं जायते नृणां भूपते र्मुखदीप्तितः।
सतोयाः शारदा मेघा इव स्यात् तदनुग्रहः।

१६ ज्ञानलाभः सुवर्णस्य लाभात् कीदृश उत्तमः।
धीलाभो रूप्यलाभाच्च श्रेष्ठो भवति कीदृशः।

१७ ऋजूनां कुक्रियात्यागो राजमार्गः प्रकीर्त्तितः।
स्वगतिं पालयेद् यः सः स्वीयान् प्राणान् प्ररचति।

१८ नाशात् पूर्व्वमहङ्कारो मनुष्याणां प्रजायते।
गर्व्वश्च पतनात् पूर्व्वं मनुष्याणां प्रजायते।

१९ अहङ्कारिजनैः सार्द्धं लोठितद्रव्यभागतः।
ऋजुभि र्मानवैः सार्द्धं संनम्रीभवनं वरम्।

२० क्रियायां पटुलोकेन मङ्गलं समवाप्यते।
यो विश्वसेत् परेशे स धन्यो भवति मानवः।

२१ बुद्धिमानिति विख्यातो जायते ज्ञानवान् नरः।

ज्ञानबृद्धिञ्च कुर्व्वाते तदीयमधुराधरौ।

२ भवेज् ज्ञानवतो ज्ञानं जीवनप्रस्रवोपमम्।
किन्त्वज्ञानत्वमात्रं स्याद् अज्ञानामुपदेशनम्।

३ हृदयं ज्ञानिनः स्त्रीयं वदनं परिशिक्षयेत्।
तदीयाधरविद्याञ्च बर्द्धयेदुत्तरोत्तरम्।

४ मधुचक्रसमं मिष्टं मनोहरवचो भवेत्।
तदेव कीकसानां हि यथा मज्जा तथा भवेत्।

१५ कोऽपि मार्गो मनुष्यस्य दृष्ट्या सम्यक् प्रबुध्यते।
किन्तु तस्य मनुष्यस्य चरमे मरणं भवेत्।

१६ कर्म्मकारी नरः स्वार्थं प्रकरोति परिश्रमम्।
यत स्तदीयवक्त्रेन क्रियते तस्य प्रार्थनम्।

२७ खनित्वा मानवो दुष्ट उत्थापयति कुक्रियाम्।
तिष्ठन्ति ज्वलदङ्गारा स्तदीयाधरयुग्मके।

२८ विमार्गगो मनुष्याणां विरोधजनको भवेत्।
विभेदयति मित्राणि परीवादकरो नरः।

२९ स्वमित्रस्य नरः क्रोधी भ्रान्तिभंजनको भवेत्।
तथा सएव स्वं मित्रं कुत्सितां पदवीं नयेत्।

३० कर्न्नुं कुत्सितचिन्तां स निमीलयति चक्षुषी।
चालयित्वाधरौ स्वीयौ सम्पादयति कुक्रियां।

३१ पलिता यस्य ये केशास्तिष्ठतो धर्म्मवर्त्मनि।
तएव तस्य लोकस्य सुशोभन्ते किरीटवत्।

१२ धीरो भवति यः क्रोधे बलिनोऽपि स उत्तमः।
यो जेता निजचित्तस्य पुरजेतुः स उत्तमः।

१३ भाजनेषु मनुष्येण गुटिका विनिपात्यते।
तन्निरूपणकार्यन्तु केवलस्य परेशितुः॥

## १७ सप्तदशोऽध्यायः।

१ विरोधयुक्तभोज्यस्य परिपूर्णाद् गृहादपि।
शुष्कः शान्त्या समायुक्तो ग्रासैकोऽपि वरो भवेत्।

२ पुत्रं लज्जाप्रदं भृत्यः प्रभविष्यति बुद्धिमान्।
अवाप्स्यत्यधिकारांशं भ्रातृभिः सहितः सहि।

३ मूषा परीक्षते रूप्य हसन्ती हाटकं तथा।
किन्तु यः परमेशः स मानसं सुपरीक्षते।

४ नृशंसाप्रियवाक्यानि श्रूयन्ते पापिभि र्नरैः।
मृषावागदुष्टजिह्वाया वाचि चित्तञ्च धीयते।

५ दीनं परिहसेद् यस्तु तत्स्रष्टारं स निन्दति।
यः परापदि नन्देत स न दण्डाद् विमुच्यते।

६ पौत्रादि र्वृद्धलोकस्य किरीटसदृशो भवेत्।
तथा बालकलोकानां पितरो गौरवं भवेत्।

७ यथा मूर्खमुखे वाक्यं विदुषां नैव शोभते।
मिथ्यावाद्यधरौ राज्ञ स्तथा शोभां न गच्छतः।

८ दानं ग्राहकलोकेन मणिवत् परिदृश्यते।
तद् यत्र याति तत्रैव सकलं सफलं भवेत्।

९ दोषमाच्छादयेद् यस्तु स नरः प्रेम चेष्टते।
कथयेत् श्रुतवाक्यं यः स तु मित्त्राणि भेदयेत्।
१० लगति ज्ञानवत्पुंसि यथैकमपि भर्त्सनं।
अज्ञे जने प्रहाराणां शतञ्च न तथा लगेत्।
११ आज्ञालङ्घनकर्म्मेको ऽशुभं विन्दति केवलं।
तद्विरुद्धं कठोरस्तु दूतः संप्रेषितो भवेत्।
१२ हृतवत्सस्य भल्लस्य साक्षात्कारो वरं भवेत्।
न त्वज्ञाननिमग्नस्य साक्षात्कारो भवेद् वरं।
१३ प्रत्युपकारको मर्त्योऽप्यपकारं करोति यः।
तदीयं भवनं क्वापि नापकारः परित्यजेत्।
१४ यथाम्बुराशिनिर्यानं विवादारम्भनं तथा।
अतः क्रोधजनः पूर्व्वं विवादं संपरित्यज।
१५ दूषयेत् पापिनं यो धार्म्मिकं यश्च दूषयेत्।
एतावुभौ नरौ लोके परमेशः ऋतीयते।
१६ ज्ञानं प्राप्तुं करेऽज्ञस्य सन्तिष्ठति धनं कुतः।
यत्कारणात् न तस्यात्र मानसं परिविद्यते।
१७ करोति सर्व्वदा प्रेम यो बन्धुः मानवो भवेत्।
उपकर्त्तुं विपत्काले भ्राता च जायते ध्रुवं।
१८ बुद्धिहीनो नरो यः स करं ताल्यों ददाति च।
निजबन्धोः समक्षं स परस्य प्रतिभूः भवेत्।
१९ विरोधे प्रीयते यः सोऽपराधेऽपि च प्रीयते।

करोत्युच्चं निजं द्वारं यः स नाशाय चेष्टते।
२० यन्मनो विपथं गच्छेत् सौभाग्यं तेन नाप्यते।
यस्य जिह्वा वदेद् वक्रं स एवापदि संपतेत्।
२१ यो मूर्खं जनयेत् पुत्रं स्वदुःखं तेन जन्यते।
एवमज्ञानपुत्रस्य पिता नैवाभिनन्दति।
२२ यथौषधं तथा स्वस्थं करोत्युल्लासयुङ्मनः।
किन्तु भग्नं मनः कुर्य्यात् शुष्कं यावच्च कीकसं।
२३ वक्रं कर्त्तुं विचारस्य मार्गं पातकिमानुषः।
उत्कोचं प्रतिगृह्णाति जनस्य कटिदेशतः।
२४ प्रज्ञावतो मनुष्यस्य विद्या तिष्ठति सम्मुखे।
किन्तु मूर्खस्य संदृष्टिः पृथिव्यन्तं प्रगच्छति।
२५ मूर्खपुत्रः स्वतातस्य मनस्तापकरो भवेत्।
तथा स्वीयजनन्याः स दुःखस्य जनको भवेत्।
२६ धार्म्मिकस्य मनुष्यस्य दण्डनं नोचितं भवेत्
न्याय्यं प्राप्तुं प्रहारश्च भूपतीनां न शोभनः।
२७ योऽधिकां न वदेद् वाणीं स एव ज्ञानवान् नरः।
विद्यते स्थिर आत्मा च जनस्य धिषणावतः।
२८ मूर्खोऽपि ज्ञानवांस्तावद् यावद् किञ्चिन् न भाषते।
अधरौ मुद्रितौ कुर्य्याद् यः स धीमान् प्रगण्यते॥

---

## १८ अष्टादशोऽध्यायः।

१ प्रवृत्ते स्वकीयेष्टे विभिन्नीभूय मानवः।
सर्व्वस्या अपि विद्याया अभ्यासे च प्रवर्त्तते।
२ वैधेयो मनुजो यः स ज्ञानेन नहि तुष्यति।
द्योतयितुं मनोवाक्यं स नरः परितुष्यति।
३ अवज्ञापि समायाति पापिलोके समागते।
अपमानेन सार्द्धं हि निन्दनञ्च प्रजायते।
४ आस्यवाणी मनुष्यस्य गम्भीरतोयराशिवत्।
यथा प्रस्रवणो वाहो विद्यापि जायते तथा।
५ विचारे धार्म्मिकं लोकं सम्प्रकर्त्तुं पराजितं।
पक्षपातो न कर्त्तव्यः किन्विपकारिणां नृणां।
६ प्रवर्त्तयत ओष्ठौ तम् अज्ञानस्य विरोधके।
प्रहर्त्तुमादिशत्येव तदीयं वदनं हठात्।
७ अज्ञानस्य मुखं स्वस्य विनाशजनकं भवेत्।
निजात्मन स्तदोष्ठावुन्माथसदृशौ स्मृतौ।
८ कर्णेजपस्य वाक्यानि भवन्ति मिष्टभक्ष्यवत्।
प्रविशन्ति मनुष्याणां तान्येव हृदयान्तरं।
९ आलस्यं निजकार्य्येषु मनुजः प्रकरोति यः।
क्रियतेऽपचयो येन तस्य स स्यात् सहोदरः।
१० परमेशस्य यन्नाम गाढदुर्गेण तत् समं।
धार्म्मिकास्तत् पलायित्वा भवन्ति परिरक्षिताः।

११ यद्धनं धनिनाक्रम्य तदेव नगरं दृढम्।
उच्चप्राचीरतुल्यञ्च तेन तत् परिबुध्यते।

१२ विनाशघटनात् पूर्व्वं मानसं गर्व्वितं भवेत्।
सम्मानघटनात् पूर्व्वं नम्रत्वञ्च प्रजायते।

१३ अश्रुते वादिनो वाक्ये यत् प्रत्युत्तरमुच्यते।
अज्ञानस्य त्रपायाश्च जायते हि तदास्पदं।

१४ मानुषस्य मनस्तस्य व्यथां सोढुं क्षमं भवेत्।
किन्तु मानसभग्नत्वं को वा सोढुं क्षमो भवेत्।

१५ सर्व्वदोपार्जयेज् ज्ञानं मानसं धिषणावतः।
तथा ज्ञानवतः श्रोत्रे शृणुते ज्ञानजं वचः।

१६ स्थानं पूर्व्वं समासाद्य नराणामुपढौकनं।
महतां मानवानां तं समीपं मंनयेत् ततः।

१७ विचारे प्रथमं लोकं धर्म्मिष्ठ इति बुध्यते।
किन्तु त्वदीयप्रत्यर्थी पश्चात् तं सुपरीक्षते।

१८ विरोधस्य सुनिष्पत्ति र्गुटिकापातनाद् भवेत्।
तथा बलवतां मध्ये जायते तेन निश्चयः।

१९ विरक्तो यो भवेद् भ्राता स गाढनगराद् दृढः।
तथा तेषां विरोधः स्याद् दुर्गीयार्गलसन्निभः।

२० मनुष्यजठरं तृप्तं तदास्यफलतो भवेत्।
स्वकीयोष्ठफलेनापि तृप्तिं समुपगच्छति।

२१ निघ्नं भवति जिह्वाया मरणं जीवनं तथा।

तत्र प्रीतिं प्रकुर्व्वाणा भुञ्जन्ते तत्फलं तथा।
२२ लभते यो जनो भार्य्यां परं वस्तु स आप्नुयात्।
तथा स परमेशस्य संप्राप्नुयादनुग्रहम।
२३ दरिद्रो मानवो यः स विनयं वक्ति केवलं।
किन्तु यो धनसम्पन्नः स वक्ति कठिनोत्तरं।
२४ बन्धुरपि मनुष्यस्य क्वापि क्षतिकरो भवेत्।
भ्रातृतोपि नृणां बन्धुः प्रेमासक्तो भवेदिह॥

## १९ ऊनविंशोऽध्यायः।

१ मनुष्यो दुर्मुखो मूर्खो धनवानपि नो वरं।
यो भवेत् सरलाचारो स दीनोपि नरो वरं।
२ विवेचनविहीना या प्रवृत्तिर्नैव सा शुभा।
यो हठाद् विक्षिपेत् पादं स कुर्य्यात् पातकं नरः।
३ अज्ञानिता करोत्येव नरं विपथगामिनम्।
तन्मनः परमेशस्य विरुद्धं परिकुप्यति।
४ धनेन परिलभ्यन्ते जनेन बहुबन्धवः।
दूरीकृतो भवत्येव दरिद्रो निजबन्धुभिः।
५ मृषासाक्षी न निर्दोषः कदापि परिगण्यते।
यो मनुष्यो मृषाभाषी स दण्डान् न विमुच्यते।
६ भूपस्यानुग्रहो लोके बहुभिः परिमृग्यते।
एवं दातु र्जनस्येह भवन्ति बहुबन्धवः।
७ यो दरिद्रो नरः स्यात् तम् ऋतीयन्ते सहोदराः।

बन्धवोऽपि दरिद्रस्य तस्मात् तिष्ठन्ति दूरतः।
अनेकै र्वचनैस्तेषु स करोति निवेदनं।

किन्तु ते प्रतिगृह्णन्ति नापि तस्य निवे[illegible]

८ यो जनः प्राप्नुयाज्ज्ञानं प्राणेषु तेन प्रीयते।
धिषणा रक्ष्यते येन सौभाग्यं तेन प्राप्यते।
९ मृषाभाषी मनुष्यो यः स हि दण्डं समर्हति।
अतथ्यवाक्यवादी यः स मनुष्यो विनश्यति।
१० अज्ञानस्य मनुष्यस्य यथा सौख्यं न शोभते।
तथा राजनि दासस्याधिपत्यं नैव शोभते।
११ स्वयं संवरति क्रोधं मानवः सुविवेचनैः।
क्षान्तदोषस्य लोकस्य गौरवं संप्रकाशते।
१२ तथा क्रोधो भवेद् राज्ञो यथा सिंहस्य गर्जनम्।
अनुग्रहस्तु तस्य स्यात् तृणस्थशिशिरोपमः।
*१३ मूर्खः पुत्रः स्वतातस्य दुःखस्य जनको भवेत्।
विन्दुविन्दुजलस्रावैः सदृशः कलहः स्त्रियाः।
१४ पितुः सकाशतो गेहं संप्राप्यन्ते धनानि च।
किन्तु ज्ञानवती नारी प्राप्यते परमेश्वरात्।
१५ घोरां निद्रां मनुष्याणाम् आलस्यं जनयेद् ध्रुवं।
तथा शीतकलोकोऽहि क्षुधया परिपीड्यते।
१६ आज्ञां पालयते यो ना प्राणान् स्वीयान् स रक्षति।
स्वं मार्गं योऽवजानाति स एव म्रियते नरः।

१७ ऋणदः स्यात् परेशाय दरिद्रेषु दयाकरः ।
अवश्यं परमेशेन तद्धणं परिशोत्स्यते ।

१८ आशायां संस्थितायां त्वं प्रशाधि तनयं निजम् ।
ततस्तव मनस्तस्य मरणे नाभिकाङ्क्षिता ।

१९ अतीवक्रोधनो यः स्यात् स शास्तिं प्राप्नुयान् नरः ।
यतः स परिमुक्तोपि पुनर्दोषं समाचरेत् ।

२० उपदेशं गृहाण त्वं मन्त्रणाञ्च निशामय ।
येन त्वं चरमे काले परं ज्ञानमवाप्स्यसि ।

२१ मानुषो मनसा स्वेन बहूनि परिकल्पते ।
किन्तु स्थिरा परेशस्य मन्त्रणैव भविष्यति ।

२२ दातृत्वेन मनुष्यो हि प्रियपात्रं भविष्यति ।
मिथ्यावादिमनुष्याच्च दरिद्रो मानवो वरः ।

२३ परमेशाद् भयं यत् स्यात् तदेव जीवनप्रदम् ।
तद् यस्यास्ति स तृप्तः स्याद् विपद् नेति तदन्तिकम् ।

२४ भोज्यपात्रे करं दत्त्वा जन आलस्यसंयुतः ।
पुनस्तं वदने दातुं नोद्यमं विदधाति सः ।

२५ निन्दके प्रहते मूर्खो जनः सावहितो भवेत् ।
धीमति भर्त्सिते स स्याद् बुद्धिमान् उत्तरोत्तरं ।

२६ तातस्यापचयी यः स्यात् मातु दूरयिता च यः ।
जनकः सोपमानस्य पुत्रो लज्जाकरश्च सः ।

२७ हे मत्पुत्रोपदेशो यो भ्रमयेज् ज्ञानवाक्यतः ।

त्वं तस्य श्रवणादेव निवृत्तो भव सर्व्वथा।

२८ असौ वदृश्यमानो यः स न्यायं परिनिन्दति।
वदनं पापिलोकस्याधर्म्मस्य ग्रासकं भवेत्।

२९ निन्दकानां कृते दण्डो विद्यते सुनिरूपितः।
पृष्ठाय मूर्खलोकानां प्रहारश्चापि विद्यते॥

२० विंश, अध्याय।

१ मद्यं प्रकोपयेन्मर्त्यं द्राक्षा च परिहासयेत्।
तेन भ्राम्यति यः कश्चित् स नहि ज्ञानवान् नरः।

२ राज्ञो भयानकत्वं यत् तत् सिंहगर्ज्जनोपमम्।
तत्कोपजनकः पापं कुर्य्यात् प्राणविरोधकम्।

३ विवादतो निवृत्तस्य नरस्य जायते यशः।
किन्तु मूर्खा मनुष्या ये ते भवन्ति प्रकोपकाः।

४ अलसः शीतकाले नो हलवाहनमिच्छति
तस्मात् शस्यस्य काले स भिक्षयापि लभेत न।

५ मनसो मन्त्रणा नृणां गम्भीरजलवद् भवेत्।
किन्तु यो बुद्धिमाल्लोकः सम्यगुत्तोलयेत् स ताम्।

६ प्रकाशयन्ति दातृत्वं स्वकीयं बहवो जनाः।
किन्तु विश्वास्यतादृक्को मनुष्यः कुत्र लभ्यते।

७ ऋजुत्वेन स्वकीयेन धार्म्मिको ना प्रवर्त्तते।
तत्पश्चात् तस्य सन्तानाः सर्व्वे धन्या भवन्ति च।

८ विचारस्यासने सम्यगासीनः पृथिवीपतिः।

अन्यायान् विकिरेत् सर्व्वान् विलोक्य निजदृष्टितः।

९ मया परिष्कृतं स्वान्तं पापं प्रक्षालितं मया।
एवंविधां कथां वक्तुं को वा शक्नोति मानुषः।

१० नानामानानि सन्तीह सन्ति नानातुलाश्च याः।
निश्चितं तानि सर्व्वाणि परमेश ऋतीयते।

११ बालकेन कृतं कर्म्म पवित्रं सरलञ्च वा।
तत् तदीयेन कार्य्येण परिज्ञायेत नान्यथा।

१२ श्रोतुं यत् श्रवणं चैव द्रष्टुं नेत्रे तथैव च।
उभयोः सृष्टिकर्त्ता स्यात् परमेशो नचेतरः।

१३ निद्रायां त्वं न प्रीयस्व नो चेत् ते स्याद् दरिद्रता।
नेत्रे उन्मील तेन त्वं भक्ष्येण परितर्प्स्यसि।

१४ नैव सम्यङ् नैव सम्यक् क्रेता वाक्यमिदं वदेत्।
किन्तु दूरं परिव्रज्य तदेव श्लाघते स हि।

१५ स्वर्णानि सन्त्यनेकानि रत्नानि सन्त्यनेकशः।
किन्तु सज्ज्ञानकोष्ठौ यौ ते रत्ने बहुमूल्यके।

१६ परस्य लग्नको यः स्याद् आदीयेत तदम्बरम्।
विदेशिनः कृते यः स्यात् तदीयाधिः प्रगृह्यताम्।

१७ भक्ष्यं प्रतारणं वक्रोऽनुभवेत् मधुरं नरः।
किन्तु शेषे मुखं तस्य शर्कराभिः प्रपूर्य्यते।

१८ सुविविच्य कृता या सा स्याच्चु भवति मन्त्रणा।
उत्तमां मन्त्रणां कृत्वा क्रियतां साम्परायिकम्।

१९ भ्रमन् प्रकाशयेद् गोप्यं पराधिकारचर्चकः।
स्वोष्ठाभ्यां स्तौति यस्तेन व्यवहारं परित्यज।

२० स्वतातं शपते यो वा शपते निजमातरम्।
तस्यान्धतमसे दीपो निर्व्वाणत्वं प्रगच्छति।

२१ योऽधिकारः पुराज्ञाय मानवैः परिलभ्यते।
तदीयचरमे किञ्चिन् मङ्गलं नैव विद्यते।

२२ दुष्टं प्रतिफलं दास्ये नोच्येतेदं वचस्त्वया।
प्रतीक्ष्यतां परेशः स रक्षणं ते करिष्यति।

२३ नानाविधानि मानानि विद्यन्ते यानि तानि च।
परमेशस्य घृण्यानि तुलापि विषमाशुभा।

२४ मनुष्यपादविक्षेपः स्यान्नुः स्यात् परमेश्वरात्।
स्वकीयपदवीं बोद्धुं कथं शक्नोति मानवः।

२५ निवेद्यस्मृनो भोग उद्दिष्टस्य विचारणम्।
एते उभे मनुष्याणां स्यातामुन्माथकोपमे।

२६ विकिरेद् भूपति र्विज्ञः सकलान् पापिनो जनान्।
तेषामुपरि चक्रस्य गतिञ्च कारयेन् नृपः।

२७ अन्तः स्थान् सकलान् भावान् परेशो यो विचारयेत्।
तस्यैव यः प्रदीपः स भवत्यात्मा नृणामिह।

२८ सत्यानुकम्पाभ्यां स्याद् भूपतेः परिरक्षणम्।
तथानुकम्पया तस्य भवेत् सिंहासनं स्थिरम्।

२९ बलमेव मनुष्याणां यूनां कीर्त्तिकरं भवेत्।

पक्ककेशास्तु वृद्धानां सम्मानं वर्द्धयन्ति हि।
२० पूयनिर्गमनं यद्वत् क्षतानामौषधं भवेत्।
तद्वदन्तःस्थभावानां प्रहार औषधं भवेत्॥

## २१ एकविंशोऽध्यायः।

१ राज्ञो मनः परेशस्य निघ्नं तिष्ठति सर्व्वथा।
तोयधारां यथा तत् स स्वेच्छया परिवर्त्तयेत्।
२ स्वस्वदृष्ट्या मनुष्याणां सर्व्वं कर्म्म सुबुध्यते।
किन्तु परीक्षते तस्य मानसं परमेश्वरः।
३ सर्व्वेषां बलिदानानां सकाशादपि सर्व्वथा।
न्यायकर्म्म च धर्म्मश्च गृह्णाति परमेश्वरः।
४ साहङ्कारा च या दृष्टि र्यन्मनो गर्व्वसंयुतं।
शोभा च पापिलोकानां त्रितयं पापकारकं।
५ कर्म्मक्षमस्य चिन्तातः केवलं लभ्यते धनम्।
किन्तु लभ्येत दारिद्र्यं सहसाकारिचिन्तनात्।
६ मृषावागिन्द्रियजिह्वया येन क्रियते धनसञ्चयः।
स विन्दति नरोऽनर्थं मृत्युन्मायश्च विन्दति।
७ पापिभि र्लोठितं द्रव्यं साध्वसं तान् प्रदर्शयेत्।
तथापि ते जने न्यायं कर्त्तुं स्वीक्रियते नहि।
८ दुष्टानां हि मनुष्याणां पदवी वक्रगामिनी।
किन्तु सेध्या मनुष्याः स्यु र्ऋजवो निजकर्म्मणि।
९ सार्द्धं कलहकारिण्या रम्यहर्म्म्ये निवासतः।

गृहपृष्ठस्य कोणेऽपि निवासो वरमुच्यते।

१० मानसं पापिलोकस्य पापकर्म्मैव वाञ्छति।
तस्य दृष्ट्या न लभ्येतानुग्रहो बन्धुभि र्जनैः।

११ निन्दके दण्डिते ज्ञानं लभते बालिशो नरः।
समवाप्तोपदेशश्च ज्ञातोपि ज्ञानवान् भवेत्।

१२ धार्म्मिकः पापिलोकानां निवेशनविवेचकः।
यतो ये पापिनो लोका आपत्सु प्रपतन्ति ते।

१३ आर्त्तं रुवत्सु दीनेषु स्त्रीयश्रोत्रे रुनद्धि यः।
रविता स्वयमार्त्तः स किन्तु श्रोष्यति कोपि न।

१४ गुप्तदानं मनुष्याणाम् अमर्षपरिशान्तिकृत्।
वक्षः स्थले कृतं दानं प्रचण्डकोपशान्तिकृत्।

१५ आनन्दो धर्म्मिलोकस्य विद्यते न्याय्यकर्म्मणि।
किन्तु तत्रैव विद्येताधर्म्मकारिनृणां भयम्।

१६ विहाय ज्ञानमार्गं यः करोति भ्रमणं नरः।
स मृतानां मनुष्याणां समज्यायां निवत्स्यति।

१७ समासजति यः सौख्ये स दरिद्रो भविष्यति।
द्राक्षारसे च तैले च सजन् वित्तं न लप्स्यते।

१८ पापी धार्म्मिकलोकानां मुक्तेर्मूल्यं भविष्यति।
प्रतारक ऋजूनाञ्च मुक्ते र्मूल्यं भविष्यति।

१९ कोपवत्या विरोधिन्या योषिता सह वासतः।
मनुष्याणां महारण्ये निवासो वरमुच्यते।

२० सुवित्तञ्च सुतैलञ्च सञ्चितं ज्ञानिनां गृहे ।
किन्तु तान्यपचिन्वन्ति यथाजाता भवन्ति ये ।

२१ अनुग्रहञ्च धर्म्मञ्च यः कश्चिदनुगच्छति ।
स मानवो यशो धर्म्मं जीवनञ्चापि विन्दति ।

२२ यो ज्ञानी मानवः स्यात् स प्रविशेत् सुदृढं पुरम् ।
तदीयगाढदुर्गञ्च निपातयति सोऽप्यधः ।

२३ स्वमुखं निजजिह्वाञ्च यः कश्चित् परिरक्षति ।
दुःखतो निजप्राणान् स मनुष्यः परिरक्षति ।

२४ योऽभिमानप्रचण्डत्वात् कर्म्माणि कुरुते नरः ।
सोऽभिमानीति विख्याति दाम्भिको निन्दकस्तथा ।

२५ अलसो मानवो यः स विनाशमेति स्वेच्छया ।
यतस्तस्य करौ कर्म्म कर्त्तुं नैवाभिलष्यतः ।

२६ करोति बहुधा लोभम् अलसो निखिलं दिनम् ।
किन्तु दद्यात् धनं धर्म्मी न तस्माद् विनिवर्त्तते ।

२७ पापिनां बलिदानन्तु भवत्येव घृणास्पदम् ।
ततोऽधिकं भवेत् किं नो आनीतं कुभिसन्धिना ।

२८ मृषा भवति यः साक्षी त्वरितं स विनश्यति ।
किन्तु शृणोति यो लोकः स व्याहरति सर्व्वदा ।

२९ स्वकीयं कठिनं तुण्डं करोति पातकी जनः ।
किन्तु विनक्ति वर्त्म स्वं सरलाचारिमानवः ।

३० विरुद्धं परमेशस्य ज्ञानं धी र्युक्तिरेव च ।

सर्व्वाण्येतानि लोकानां साथर्कानि भवन्ति नो।
११ सज्जयेद् वाजिनं लोकः संग्रामदिवसं प्रति।
किन्तु भवेज्जयो नृणां केवलात् परमेश्वरात्॥

## २२ द्वाविंशोऽध्यायः।

१ सुख्यातिः श्रेयसी नृणां प्रभूतविभवादपि।
तथा रूप्यात् सुवर्णाच्च भविकः स्यादनुग्रहः।
२ धनवान् धनहीनश्च साक्षात् कुर्य्यात् परस्परम्।
किन्तु स्रष्टा तयोरेको विद्यते परमेश्वरः।
३ विपत्तिं वीक्ष्य गोपायेद् आत्मानं परिणामदृक्।
किन्त्वज्ञा अग्रतो गत्वा परिविन्दन्ति शासनम्।
४ यद् भयं परमेशात् स्यात् तस्मात् नम्रतयापि च।
धनञ्च जीवनञ्चैव कीर्त्तिश्च परिजायते।
५ तिष्ठतः कण्टकान्मायै मार्गे विपथगामिनाम्।
अतो रिरक्षिषु र्योऽसून् तेभ्यो दूरे स तिष्ठतु।
६ योऽध्वा बालस्य गन्तव्य स्तं तं त्वं परिशिक्षय।
तेन वृद्धोपि तस्मात् स विमुखो न भविष्यति।
७ दरिद्रेषु मनुष्येषु प्रभुत्वं कुरुते धनी।
उत्तमर्णमनुष्यस्याधमर्णः किङ्करोपमः।
८ अधर्म्मबीजवप्ता ना शस्यं छन्तति दुर्गतिम्।
स्वकीयकोपदण्डेन स विनश्यति मानवः।
९ दृष्टि र्यस्य वदान्या स्यात् आशिषं सोभिविन्दति।

यतस्तेन मनुष्येन दीनायान्नं प्रदीयते।

१० निन्दके तु वहिर्भूते विवादोऽपि वहिर्भवेत्।
निवर्त्तिते विरोधे चापमानश्च निवर्त्तते।

११ मनसो निर्म्मलत्वे यो मानवः परिप्रीयते।
तस्याधरस्य वक्तृत्वाद् राजापि बन्धुतामियात्।

१२ ज्ञानरत्नां प्रकुर्व्वीत परमेशस्य लोचने।
वाक्यं प्रवञ्चकानाञ्च सोऽन्यथा विदधाति हि।

१३ अलसः कथयेदित्थं विद्यते केशरी वहिः।
अवश्यमेव तेनाहं घानिष्ये राजवर्त्मनि।

१४ वेश्याया वदनं नूनं वृहत्खातसमं भवेत्।
परेशाघृण्यलोका ये तन्मध्ये निपतन्ति ते।

१५ अज्ञत्वं बालकस्वान्ते वद्धं तिष्ठति निश्चितम्।
किन्तु शासनदण्डेन तस्माद् दूरं प्रयाति तत्।

१६ धनं वर्द्धयितुं येन प्रापद्रुघ्यते दुर्गतः।
ददाति धनिने यश्च तयोर्दैन्यं भविष्यति।

१७ ज्ञानस्य वचनानि त्वं सावधानो निशामय।
ममोपदेशवाक्ये च निधेहि निजमानसम्।

१८ यतस्त्वदन्तरे स्थित्वा तत्ते सौख्यं प्रदास्यति।
त्वदीयाधरौ तेन कारिष्येते च शोभनौ।

१९ परेशे तव विश्वासः स्थिरः स्यादिति कारणात्।
एतानि सर्व्ववाक्यानि त्वामद्य ज्ञापयाम्यहम्।

२० सत्यवाक्यस्य सत्यत्वं तथा त्वां ज्ञापयाम्यहम्।
यथा त्वत् प्रेरकेभ्यस्त्वं दातुं सत्योत्तरं क्षमः।

२१ एतत्कारणतश्चाहं त्वां समुद्दिश्य केवलं।
ज्ञानेन च सुयुक्त्या किं नालिखं वच उत्तमं।

२२ दरिद्रत्वाद् दरिद्रस्य द्रव्यं त्वं नैव चोरय।
उपद्रुता विचारेण नोपद्रव्या जना त्वया।

२३ यतो विचारयिष्यन्ते परमेशेन ते जनाः।
तानुपद्रवतः प्राणानुपद्रोष्यति स प्रभुः।

२४ नहि कोपिजनैः सार्द्धं क्रियतां बन्धुता त्वया।
क्रोधनैश्च जनैः सार्द्धं न गन्तव्यं त्वया पथि।

२५ न चेत् तदा तदीयं त्वं मतं संपरिशिक्ष्यसि।
एवं प्राणान् स्वकीयान् त्वम् उन्माथे पातयिष्यसि।

२६ हस्तं ददति हस्तं तेऽधमर्णलग्नका अपि।
मध्ये तेषां जनानां त्वं नैव कोपि भविष्यसि।

२७ यदि ते परिशोधार्थं सम्स्थानं नास्ति किञ्चन।
तदा त्वत्नीचतः शय्या त्वदीया नेष्यते कथं।

२८ त्वत् पूर्व्वपुरुषै र्भूमे र्यत् प्रमाणमदीयत।
तदेव परिमाणं त्वं कदापि नैव दूरय।

२९ उद्योगिनं निजे कार्य्ये त्वं प्रपश्यसि कञ्चन।
नीचसाक्षान् न तिष्ठन् स स्थाता साक्षान् महीभृताम्॥

---

## २३ त्रयोविंशोऽध्यायः।

१ सद्दाधिपतिना भोक्तुम् उपविश्य त्वमासने।
त्वदग्रतः किमस्तीति त्वया सम्यग् विविच्यताम्।
२ स्वोदरम्भरिताकारी यदि त्वं मानवो भवः।
तदा स्वकीयकण्ठे हि कर्त्तिका दीयते त्वया।
३ तदीयमुत्तमं भक्ष्यं मा गृधस्त्वं कदाचन।
यतस्तत्खाद्यवस्तूनि संभ्रान्तिजनकानि हि।
४ मञ्चितुं बहुवित्तानि मातियत्नं समाचर।
तथा स्वकीयया बुद्ध्या प्रवृत्तिं त्वं परित्यज।
५ मा धनं प्रति क्रामस्व तन्न तिष्ठति किञ्चन।
नाकमुड्डीय निर्याति पक्षवत्कुररो यथा॥
६ कुदृष्टीनां मनुष्याणां न भक्ष्यं भुज्यतां त्वया।
तथा तस्योत्तमे खाद्ये लालसं त्वं परित्यज।
७ यतः स मनसा यद्वद् भावयेत् तादृशोऽस्ति सः।
पिब भुंक्ष्वेति वक्ति त्वां किन्तु नास्ति मनस् त्वयि।
८ यस्तु ग्रासस्त्वया भुक्तस्तं त्वं परिवमिष्यसि।
स्वकीयमिष्टवाक्यस्यापचयश्चापि भोत्स्यते।
९ कुहरेऽज्ञानकर्णस्य कथा मा कथ्यतां त्वया।
यत स त्वदीयप्रज्ञाया वाचं तुच्छीकरिष्यति।
१० नापसारय भूमेस्त्वं मानचिह्नं पुरातनं।
पितृहीनस्य क्षेत्रञ्च त्वया नैव प्रविश्यतां।

११ यतो मुक्तिप्रदस्तेषामेक आस्ते महाबली।
स त्वद्विपक्षतस्तेषां सुविचारं करिष्यति।
१२ त्वदीयं मानसं यत् तदुपदेशे निधीयतां।
शब्दग्रहौ त्वदीयौ त्वं ज्ञानवाक्ये नियोजय।
१३ बालस्य शासनं कर्त्तुं मा निवर्त्तस्व कुत्रचित्।
दण्डेन प्रहृतो बालो न कदापि मरिष्यति।
१४ दण्डमादाय तेनैव त्वया स परिताड्यतां।
तथा कृत्वा तदीयासून् परलोकादविष्यसि॥
१५ हे मदीय सुत स्वान्ते त्वदीये ज्ञानितां गते।
मामकीनं मनो यत्तद् आनन्दं परिगच्छति।
१६ यथार्थवादिनौ स्यातां तावकीनाधरौ यदा।
आह्लादतामवाप्नोति मदीयं मानसं तदा।
१७ शुभानि पापिलोकानां न द्रष्टु तव मानसं।
किन्तु कृत्स्नं दिनं तिष्ठ परमेश्वरभीतितः।
१८ अवश्यमेव मन्तव्यं परकालो हि विद्यते।
तेन त्वदीयप्रत्याशा नहि व्यर्था भविष्यति।
१९ समाकर्ण्य मत्पुत्त्र ज्ञानवान् भव सर्व्वथा।
त्वदीयं मानसञ्चैव सत्पथं परिणीयतां।
२० मत्ता भवन्ति ये लोका गोस्तनीरसपानतः।
मांसाशिनश्च ये लोकास्तेषां सङ्गं परित्यज।
२१ यतो दरिद्रतामेति मत्तः कुक्षिम्भरिस्तथा।

निद्रालुत्वं नरं खण्डं वसनं परिधापयेत् ।

२२ त्वज्जन्मदाढतातस्य वचनं त्वं निशामय ।

त्वदीयजननी वृद्धा मा तुच्छीक्रियतां त्वया ।

२३ क्रीणीहि सत्यतां किन्तु विक्रीणीहि न तां क्वचित् ।

विद्योपदेशबुद्धीनां क्रयणं क्रियतां त्वया ।

२४ धार्म्मिकस्य पिता यः स हर्षतां परिगच्छति ।

स आनन्दमवाप्नोति यस्य कोविदजन्मदः ।

२५ तावकीनः पिता नन्देत् त्वदीया जननी तथा ।

त्वद्गर्भधारिणी या सा सर्व्वदा परिनन्दतु ।

२६ हे मत्पुत्त्र तव स्वान्तं त्वया मह्यं प्रदीयतां ।

लोचनाभ्यां त्वदीयाभ्यां मम वर्त्म निरीक्ष्यतां ।

२७ भवेद् वाराङ्गना तुल्या पुष्करिण्या गभीरया ।

सदृशी चुद्रकूपेन स्यात् नारी व्यभिचारिणी ।

२८ यथा दस्युस्तथात्मानं गोपायन्ती सुतिष्ठति ।

प्रवञ्चकजनानां सा वृन्दञ्च परिवर्द्धयेत् ।

२९ केषां भवति सन्तापः केषां वा मानसज्वरः ।

केषां भवेद् विरोधस्य केषां चिन्ता प्रजायते ।

केषामकारणाघातः केषां वा रक्तलोचने ।

३० तिष्ठन्ति सुचिरं कालं ये द्राक्षारससन्निधौ ।

ये चान्विष्टुं सुरां यान्ति तेषामेव नृणां भवेत् ।

३१ यदा द्राक्षारसो रक्तस्तेजस्वी भाजने चलेत् ।

तदानीं नैव तं द्वाःस्थं प्रति निरीक्षसे।

२२ यतः स चरमे काले दंक्ष्यति त्वां भुजङ्गवत्।
कालीविषधरस्त्वां स संदंक्ष्यति तथा पुनः।

२३ नयने तावकीने द्वे द्रक्ष्यतः स्वैरिणीं स्त्रियं।
त्वदीयं मानसञ्चैव दुष्टां वाचं वदिष्यति।

२४ अग्निमध्ये शयानस्य पीते वा कूपकोपरि।
शयानस्य मनुष्यस्य सदृशस्त्वं भविष्यसि।

२५ तैरहं ताडितः पीडां लब्धवान्नेति वक्ष्यसि।
तैरहं प्रहृतः सत्यं किन्तु तन्नैव बुद्धवान्।
कदाहं जागरिष्यामि चेष्टिष्ये मदिरां पुनः॥

२४ चतुर्विंशोऽध्यायः।

१ शुभं दुष्टमनुष्याणां नैव विद्विष्यतां त्वया।
स्थातुञ्च तै र्जनैः सार्द्धं न त्वया परिवाञ्छ्यतां।

२ यत स्तेषां नृणां चित्तं प्रकल्पत उपद्रवम्।
कथ्यते च कथा तेषामधरैः क्लेशदायिनी।

३ परिनिर्म्मीयते लोके विद्यया सुनिकेतनं।
तथा धिषणया तच्च स्थिरतामुपनीयते।

४ ज्ञानेनैव तदीयानि कोष्ठानि सकलानि च।
उत्तमैश्च महामूल्यैः पूर्य्यन्ते तानि वस्तुभिः।

५ विपश्चिन्मानवो यः स जायते बलसंयुतः।
पराक्रमविशिष्टश्च भवति ज्ञानवान् नरः।

६ विविच्य बहुधा बुद्ध्या क्रियतां साम्परायणं।
मन्त्रणाभिः प्रभूताभि र्जयः संजायते यतः।
७ विद्या लोकाद् यथाजाताद् अतोऽत्युच्चतरा भवेत्।
स विचारे न शक्नोति व्यादातुं वदनं निजम्।
८ येनैव हि मनुष्येण प्रक्रियेत कुकल्पना।
कुमन्त्रीति प्रविख्यातो मानवः स भविष्यति।
९ अज्ञानस्य मनुष्यस्य कल्पनं कलुषं भवेत्।
यो निन्दको मनुष्यः स घृण्यते सकलै र्जनैः।
१० विपदः समये त्वं चेत् जायसे हीनसाहसः।
भविष्यति तदाल्पीयान् तावकीनः पराक्रमः।
११ समर्पिता बधार्थं ये त्रायस्वा तै नरा स्त्वया।
भवन्ति ये जना बध्या मानवा स्तान् समुद्धर।
१२ न तद् वयं विजानीमस्त्वमित्थं यदि भाषसे।
तदा विचारयेद् योऽन्तः स किं तन्नहि भोत्स्यति।
यो रक्षति तव प्राणान् स किं तद् वेत्त्यसक्षमः।
स्वस्वकर्म्मफलं किं स नैकैकाय प्रदास्यति।
१३ पीते मधुनि हे पुत्र यथा मिष्टं प्रबुध्यसे।
चुषिते मधुचक्रे च यथा सुस्वाद् बुध्यसे।
१४ विद्याया बोधमाप्यापि तादृशं भोत्स्यते त्वया।
अवश्यं परकालेऽस्ति नाशा व्यर्था भविष्यति।
१५ न गुप्तस्तिष्ठ पापिष्ठ प्रवेष्टुं धर्म्मिणो गृहं।

तदीयमाश्रयञ्चैव नैव त्वं परिनाशय।

१६ यद्यप्तिष्ठित पतित्वापि सततत्व: सुधार्म्मिक ।
किन्तु पापिमनुष्यो यः स आपदि निम [illegible] ।

१७ त्वद्वैरिणि विपद्ग्रस्ते न त्वया सम्प्रहृ [illegible]म्।
तस्मिंश्च स्खलिते नैव मनसा तव नन्द्यताम्।

१८ नो चेत् दृष्ट्वा परेश स्तत् न सन्तुष्टो भविष्यति।
तथा तस्मान्निजं कोपं स परावर्त्तयिष्यति।

१९ दृष्ट्वा पातकिनं लोकं व्याकुलस्त्वं न वा भवेः।
दुराचारं नरं दृष्ट्वा त्वं मात्सर्य्यञ्च नो कुरु।

२० यतो दुष्टस्य लोकस्य मङ्गलं न भविष्यति।
पापीयसां मनुष्याणां दीपो निर्व्वाणतामियात्।

२१ हे मतपुत्र परेशात् त्वं भूपतेश्च भयं कुरु।
तथा चञ्चलचित्तानां सङ्गो न क्रियतां त्वया।

२२ यतस्तेषां मनुष्याणां विनाशः संघटिष्यते।
कथं घटिष्यते नाशो वेत्तुं शक्नोति को नरः॥

२३ मानवा ज्ञानयुक्ता ये तेषां वाक्यान्यमूनि हि।
उपरोधो न कर्त्तव्यो विचारसमये नरैः।

२४ यो दुष्टं धार्म्मिकं वक्ति शपन्ते तं जनं जनाः।
घृतीयन्ते च तं लोकं देशस्थाः सकला नराः।

२५ तद्भर्त्सनकर्त्तां नृणां महानन्दः प्रजायते।
आशीर्व्वाक् परमा तेषां मानवानां प्रजायते।

६ ये मनुष्या भवन्तीह यथार्थोत्तरवादिनः।
तेषां दशनवासांसि परिचुम्बन्ति मानवाः।
७ त्वदीयं सकलं कार्य्यं वहिरेव विधीयताम्।
तस्मिन् क्षेत्रे कृते पश्चाद् गृहं निर्म्मीयतां तव।
८ अकारणं न साक्षी स्या स्त्वदीयासन्नवासिनः।
त्वदीयाधरयुग्मेन मा कार्षीस्त्वं प्रतारणां।
९ स साम्प्रति यथाकार्षीत् कुर्य्यां तत्प्रत्ययं तथा।
तत्कर्म्मसदृशं दास्ये फलमेवं न वोच्यताम्॥
१० अलसस्य मनुष्यस्य क्षेत्रेण गतवानहम्।
अज्ञानस्यापि द्राक्षाया क्षेत्रेण गतवानहम्।
११ पश्य तस्याखिलं व्याप्तं वृश्चिकपत्रकण्टकैः।
तस्य पाषाणप्राचीरं सर्व्वतो भग्नतां गतम्।
१२ तन्निरीक्ष्य मया किञ्चित् चिन्तेन संव्यविच्यत।
उपदेशो मया प्रापि तदेव परिवीक्ष्य च।
१३ किञ्चिन् निद्राञ्च तन्द्राञ्च विश्रामं कर्त्तुमेव च।
त्वया सङ्कोचिते किञ्चित् स्वकीये तु करद्वये।
१४ आगमिष्यति दारिद्र्यं त्वदीयं पथिको यथा।
उपस्थास्यति दैन्यञ्च सज्जितेव वरूथिनी॥

---

## २५ पञ्चविंशोऽध्यायः।

१ राजगणेषु कथनं ८ कलहकथनं नानाविषकथनञ्च।

१ यिहूदादेशस्य हिषकियनामकराजस्य प्रजाः सुखे-
मना हितोपदेशानेतान् संजगृहुः।

२ कथायां परिगुप्तायां भवतीश्वरगौरवम्।
किन्तु सम्यग् विचारात् तद् भूपते र्गौरवं भवेत्।

३ विहायसो यथोच्चत्वं धरित्र्या नीचता यथा।
तथान्तः करणं राज्ञो बोधगम्यं न जायते।

४ त्वं दुर्व्वर्णस्य मध्यस्थं मलं सर्व्वं वहिष्कुरु।
तेनैव निर्म्मलं पात्रं भविष्यति परिष्कृतः।

५ दुष्टान् दूरय सर्व्वांस्त्वं भूपतेः सन्निकर्षतः।
तेन सिंहासनं धर्म्मात् सुस्थिरं संभविष्यति।

६ भूपतेः सम्मुखे स्वस्य सम्मानं क्रियतां नहि।
तथा मुख्यमनुष्यस्य पदं न स्थीयतां त्वया।

७ असम्मानं न भद्रं ते भूपतेः सम्मुखे भवेत्।
स चेद् वदेद् इहागच्छ तर्हि तन्मङ्गलं तव॥

८ हठाद् विवदितुं मैव गच्छ गच्छसि चेत्तदा
किं करिष्यसि शेषे त्वं लज्जितः प्रतिवासिना।

९ कुर्य्या विवादनिष्पत्तिं सहितः प्रतिवासिना
गोपनीया कथां नैव कस्मैचित् त्वं प्रकाशय।

१० प्रकाशिता श्रुता येन स हि त्वां त्रपयिष्यति।

अपकीर्त्तिस्त्वदीया सा नैव लोपं प्रयास्यति।

११ रूप्यपात्रे सुवर्णस्य फलं भवति यादृशम्।
भाषितं योग्यकालेऽपि वचनं तादृशं भवेत्।

१२ यथा नासाग्रभूषा च निर्म्मलं स्वर्णभूषणं।
तथाज्ञावर्त्तिकर्णाभ्यां ज्ञानवान् भर्त्सनाकरः।

१३ विश्वास्यः प्रेरके दूतः स्याद् यथा हिमशीतवत्।
स स्वकीयप्रभोः प्राणान् करोत्याप्यायितान् यतः।

१४ यो जनो दानमुद्दिश्य मिथ्यादर्पवचो वदेत्।
निरम्बुमेघनीकाशो गन्धवाहोपमश्च सः।

१५ सुदीर्घसहनादेव सम्मति भूपतेरपि।
कोमला रसना या सा भङ्क्तुं शक्नोति कीकसं।

१६ मधु प्राप्य त्वया पेयं यथा परिमितं भवेत्।
नो चेदतीव तृप्तस्त्वं वमनं प्रकरिष्यसि।

१७ समीपवासिनो गेहं यातो पादौ पुनः पुनः।
त्वं निवर्त्तय नो चेत स विरक्तस्त्वाम् ऋतीयिता।

१८ समीपवासिनः साक्ष्यम् अतथ्यं येन दीयते।
ससः स्यात् तीक्ष्णवाणेन गदाखड्गोपमश्च सः।

१९ यादृशो भग्नदन्तः स्यात् स्खच्चरादश्च यादृशः।
दुःखकाले च विश्वासः प्रवञ्चकनरे तथा।

२० दुःखिनः सन्निधौ गानं शीते वस्त्रहरोपमं।
शिखरिण्या यवक्षारे निक्षेपसदृशञ्च तत्।

रिपु र्यदि क्षुधार्त्तस्ते तर्हि तं त्वं प्रभोजय।
यथा यदि तृषार्त्तः स्यात् तर्हि तं परिपायय।
तेन त्वं मस्तके तस्य ज्वलदग्निं निधास्यसि।
तदीयञ्च फलं तुभ्यं परमेशः प्रदास्यति।
यथा पवन औदीच्यः सर्व्वां वृष्टिं निवारयेत्।
जिह्वा सूचकलोकस्य क्रोधमुत्पादयेत् तथा।
कलहिन्या स्त्रिया सार्द्धं वासाद् उत्तमवेश्मनि।
गृहपृष्ठस्य कोणेऽपि निवासो वरमुच्यते।
पिपासार्त्ताय लोकाय यथा स्यात् शीतलं जलं।
दूरदेशात् समायाता सुवार्त्तापि भवेत् तथा।
तथा स्याद् धार्म्मिको लोकः पतितः पापिसम्मुखे।
यथाविलो जलस्रावस्त्रालोडितजलाकरः।
बहुनो मधुनः पानं भद्रं भवति नो यथा।
तथैव गौरवं न स्यात् स्वगौरवगवेषणं।
स्वकीयं मानसं येन मनुष्येण न दम्यते।
भित्तिहीनेन भग्नेन पुरेण स जनः समः॥

## २६ षड्विंशोऽध्यायः।

मूर्खेषु कथा। १२ अलसेषु कथा। १७ कलहकृत्सु कथा। च।

१ ग्रीष्मकाले हिमं यद्वत् वृष्टिश्च शस्यकर्त्तने।
तथैवाज्ञानलोकस्य सम्मानं स्यादसम्भवं।
२ भ्राम्यन पक्षीव चाड्डीना पक्षीव मासवर्त्तिका।

कारणं समायाति नाभिज्ञोऽपि मानवम्।
श यथा तुरङ्गाय खलिनं गर्द्दभाय च।
था मूढमनुष्याणां पृष्ठाय लगुडो भवेत्।
मूर्खतानुसारात् त्वं मूर्खं नैवोत्तरं वद।
दिति त्वञ्च तस्यैव सदृश: सम्भविष्यसि।
मूर्खतानुसारात् त्वं मूर्खं प्रत्युत्तरं वद।
। चेत् स ज्ञानिम्मन्यो भविष्यति स्वदृष्टित:।
थाजातमनुष्येण वार्त्ता य: प्रेषयेत् नर:।
। जन: क्षतिमाप्नोति छिनत्ति च निजं पदं।
ञ्जस्य चरणौ यद्वद् अतीव दुर्ब्बलौ भवेत्।
प्रज्ञस्य वदने तद्वद् उपदेशवचो भवेत्।
णे: प्रक्षेपणो यद्वत् शिलानां मध्यतो भवेत्।
तद्वद् बालिशलोकेषु भवेत् सम्मानमर्पितं।
यथा मत्तमनुष्यस्य हस्ते भवति कण्टकम्।
तथा हितोपदेशोऽपि वैधेयवदने भवेत्।
एतत् सर्व्वजगद् येन प्रभुणा सृष्टं पुरा।
अज्ञाज्ञानिकाभ्यां स ददाति कर्म्मण: फलं।
कुक्कुरो निजवान्ताय यथैव परिवर्त्तते।
अज्ञताये तथाज्ञानी मानुष: परिवर्त्तते।
स्वदृष्ट्या ज्ञानिम्मन्यो यो जनो दृश्यते त्वया।
तस्माज्जनाज्जने मूढे प्रत्याशा करणं वरं॥

अलसो मानुषो ब्रूते केशरी पथि विद्यते।
महाबलो मृगेन्द्रश्च राजवर्त्मनि वर्त्तते।
कवाटं हंसयन्त्रेण यथा संपरिवर्त्तते।
तथालसनरः स्वस्यां शय्यायां परिवर्त्तते।
अलसो मानुषो यः स निधाय भाजने करम्।
पुन र्निजमुखे दातु क्लेशमेव स बुध्यते।
सन्मन्त्रणाविशिष्टेभ्यः सप्तलोकेभ्यएव च।
अलसो मानुषो यः स ज्ञानिनं मन्यते स्वयं॥

पथि गच्छन् परेषां यो विवादेऽभिरतो भवेत्।
स कुक्कुरश्रवोधर्त्तुर्मानुषस्य समो भवेत्।
अङ्गारं मृत्युकारञ्च शरं यो मानवः क्षिपेत्।
समीपवासिनं लोकं प्रतार्य्य वक्ति यो नरः।
सम्प्रति क्रियते ह्येतत् मया किमुत खेलनं।
एतावुभौ मनुष्यौ तु स्यातामुन्मत्तकोपमौ।
यथाग्निरिन्धनाभावात् निर्व्वाणत्वं प्रगच्छति।
तथैव सूचकाभावाद् विरोधो नैव तिष्ठति।
१ यथा ज्वलन्तमङ्गारं प्रत्यङ्गारोऽग्नये समित्।
विरोधवृद्धये तद्वद् विरोधी मानुषो भवेत्।
२ अतीवस्वादुतायुक्तं खलस्य वचनं भवेत्।
तथा मानवचित्तानां प्रविशत्यन्तरान्तरं।
३ दृष्टान्तःकरणो लोकः स्तुतिकारोऽधरस्तथा।

स्य कृष्णपत्रेण मण्डितस्य समो भवेत्।
ीयाकारकस्त्विच्चे प्रविधाय प्रतारणां।
ाराभ्यां स्वकीयाभ्यां कापथ्यवचनं वदेत्।
शानुग्रहवाक्येपि नैव प्रत्याय्यतां त्वया।
ोऽन्तःकरणं तस्य प्रपूर्णं घृण्यवस्तुभिः।
तीया यस्य लोकस्य कापथ्येन समाहृता।
ाशितो भवत्येव तस्य दोषः सभान्तरे।
ातं संखायते येन तन्मध्ये स नरः पतेत्।
षाणो लोठ्यते येन स तस्मै परिवर्त्तते।
क्लिश्नाति मृषा जिह्वा तमेव सन्तोयते
र्मं कुर्य्याद् विनाशस्य वदनं स्तवकारकम्॥

२७ सप्तविंशोऽध्यायः।

१ आत्मश्लाघाक्रोधयोः कथनं ४ सत्यप्रेम्णः कथनं ११ यिष्वा-
भावस्य कथनं २१ मृदकर्म्मणः कथनञ्च।

माहङ्कारकथा श्वार्थं त्वया नैवाभिकथ्यताम्।
ादेकदिनमध्ये यद् भविष्यति न वेत्सि तत्।
ाशस्यस्व त्वमन्येन किन्तु स्वास्येन न त्वया।
ुख्यायेथा स्त्वमन्येन किन्तु स्वोष्ठेन न त्वया।
ुरु भवति पाषाणो गुर्व्वी च सिकता भवेत्।
किन्तु बालिशलोकस्य कोपस्ताभ्यां गुरु भवेत्।
दुरन्तो जायते क्रोधः कोपः प्रलयकृद् भवेत्।

किन्तु कः शक्नुयात् स्थातुं योषिद्दुतुकुधोऽन्तिके॥

५ गुप्तप्रेम्णो वरं सा स्याद् भर्त्सना या प्रकाशिता।

६ विश्वास्यो जायते लोके प्रहारो बन्धुना कृतः।

किन्तु प्रतारणाकारि चुम्बितञ्चापि वैरिणा।

७ ऋतीयते सुहृप्तो यो मधुचक्रं स मानवः।

किन्तु तिक्तस्य मिष्टत्वं जिघत्सुं प्रति जायते।

८ स्वस्थानं यः परित्यज्य करोति भ्रमणं नरः।

स नरो नीडतो भ्राम्यद् विहङ्गमसमो भवेत्।

९ तैलं सुगन्धि धूपश्च सुगन्धि म्तुष्टिकृद् यथा।

मनसो मन्त्रणान् मिष्टं प्रेम मित्रस्य तादृशं।

१० स्वस्य तातस्य वा मित्रं न त्वया परिहीयताम्।

दुःखस्य समये नैव स्वभ्रातु र्भवनं व्रजेः।

यतो भ्रातु र्विदूरस्थात् मित्रञ्च सविधं वरम्॥

११ ज्ञानवान् भव मे पुत्र मानसं मम नन्दय।

प्रतिवक्तुं प्रशक्ष्यामि तेनापमानदं जनं।

१२ विपदं वीक्ष्य गुप्तः स्यात् परिणामप्रदृग् जनः।

वैधेयमानुषो गच्छन् दण्डे संपतितो भवेत्।

१३ परस्य प्रतिभू र्यः स्यात् संगृहाण तदंशुकम्।

विदेशिन ऋणस्यार्थं गृहाण तस्य बन्धकम्।

१४ प्रगे प्रभाषते प्रोच्चै र्बन्धुं प्रति य आशिषं।

शापत्वेन तदीयं तद् वचनं गणयिष्यते।

१५ कस्मिन् काले महावृष्ट्या तोयपातो यथा भवेत् ।
तथा भवति नारी च सदा कलहकारिणी ।
१६ यस्तां गोपायितुं शक्तः स दक्षिणकरस्थितं ।
तैलं सुगन्धि वायुञ्च भवेद् गोपायितुं क्षमः ।
१७ लोहो लौहं सतेजस्कं प्रकरोति यथा तथा ।
नरः स्वमित्रवक्त्रञ्च सतेजस्कं करोति हि ।
१८ रक्षत्युडुम्बरं वृक्षं यः स तत्फलमश्नुते ।
स्वस्वामी सेव्यते येन प्राप्नोति स जनो यशः ।
१९ प्रतिबिम्बं यथा तोये स्ववक्त्रसदृशं भवेत् ।
तथान्तःकरणं चैकं अन्यान्तःकरणोपमम् ।
२० यथा न जायते तृप्तिः श्मशानपरलोकयोः ।
तथा नयनयोस्तृप्तिं मानुषस्य न जायते ।
२१ यथा मूषा च दुर्वर्णं हसन्ती च सुवर्णकं ।
मानवोपि प्रशंसाञ्च तथैव सुपरीक्षते ।
२२ गोधूमैन सहाज्ञं चेत् चूर्णीकुर्य्याद् दृषन्ने ।
तथापि मूर्खता तस्य कदापि नापगच्छति ॥
२३　स्वकीयमेषयूथस्य तत्त्वं संज्ञायतां त्वया ।
निधीयतां निजस्वान्तं त्वया निजपशुव्रजे ।
२४ यतो हि द्रविणं नैव चिरकालं सुतिष्ठति ।
न तिष्ठति किरीटञ्च पुरुषात् पुरुषान्तरं ।
२५ द्योतिष्यते तृणं तेन दृश्यते च नवं तृणं ।

यद्दोष्यति तृणं सर्व्वं पर्व्वतोपरिसंस्थितं।
२६ मेषवत्सा भविष्यन्ति त्वदीयवस्त्रकारणं।
त्वदीयक्षेत्रमूल्यार्थं छागएव भविष्यति।
२७ त्वदीयपरिवाराणां युवतीनां तवापि च।
भोजनाय प्रदास्यन्ति छागयस्ते बहुलं पयः॥

## २८ अष्टाविंशोऽध्यायः।

### १ धर्म्माधर्म्मयो र्ज्ञानोपदेशकथनं।

१ न ताडितोपि केनापि पापी लोकः पलायते।
किन्तु तिष्ठन्ति निर्भीताः सिंहवद् धार्म्मिका नराः।
२ प्रजानां दोषतो नित्यं राजा भवति नूतनः।
किन्तु बुद्धिमता राज्यं ज्ञानिना च स्थिरं भवे
३ उपद्रवति यो निःस्वो मानुषो दुर्व्विधं नरं।
स सर्व्वशस्यसंनष्टा संप्लाविपयसा समः।
४ व्यवस्था लङ्घिलोकेन पापी लोकः प्रशस्यते।
पालयन्ति व्यवस्थां ये तैस्तैः सार्द्धं विरुध्यते।
५ नहि न्यायं विजानन्ति ते ये कलुषिणो नराः।
परेशान्वेषिणो ये तु ते विजानन्ति सर्व्वशः।
६ सरलो मानवो यः स दुर्व्विधोपि वरो भवेत्।
विमार्गगामिलोकस्तु बहुवित्तोपि नो वरः।
७ व्यवस्था मान्यते येन सएव ज्ञानवान् सुतः।
योऽपव्ययकृतो मित्रं करोति सत्रपां पितुः।

८ अन्यायतश्च कोषोद्याद् यो जनो वर्द्धयेद् धनम्।
स तत् संचिनुयात् निःस्वे कारुण्यकारिणः प्रति

९ शास्त्रसंश्रवणात् कर्णौ निवर्त्तयति यो जनः।
प्रार्थनापि तदीया या सा भवेद्दर्त्तनास्पद।

१० यो नयेत् कुपथं साधुं स स्वखाते पतेत् नरः।
किन्तु यो मानवः साधुर्ध्विकुर्य्यात् स उत्तमं।

११ ज्ञानवान् जायते लोकः समृद्धो निजदृष्टितः।
किन्तु धीमान् दरिद्रो यः स तं लोकं परीक्षते।

१२ भवेद् गौरवमत्यन्तम् आनन्दे सति धर्म्मिणाम्।
पापिनामुन्नतौ सत्यां गुप्तास्तिष्ठन्ति मानवाः।

१३ गोपायति स्वपापं यः स न विन्दति मङ्गलं।
किन्तु स्वीकृत्य तत्त्यजाद् यः स कारुण्यमाप्नुयात्।

१४ धन्यः स एव लोकेषु सर्व्वदा संबिभेति यः।
कठोरं यो मनः कुर्य्यात् आपदं स प्रगच्छति।

१५ संगर्जन् केशरी यद्वद् दुष्ट ऋक्षश्च यादृशः।
तथा भवति दुर्वृत्तः शास्तापि दुर्विधं प्रति।

१६ सातीवोपद्रवं कुर्य्याद् यो नृपो बालिशो भवेत्।
किन्तु लोभार्त्तको यः स्यात् दीर्घायुष्टुं स विन्दति।

१७ शरीरिणां निहन्तुं यो मनुष्यो व्याकुलो भवेत्।
अन्ये धरणभीत्या स खातं प्रति पलायते।

१८ ऋजुमार्गेण यो गच्छेत् स नरो रक्षितो भवेत्।

কিন্ত্বকস্মাৎ পতন্ মর্ত্যঃ স যো বিপর্য্যয়ো ভবেৎ।
১৯ স্বভূমিঃ কৃষ্যতে যেন স ভোজ্যং বহু বিন্দতি।
অলসানুগতো লোকো যঃ স দৈন্যমবাপ্নুয়াৎ।
২০ বিশ্বাস্যো মানবঃ প্রাচ্যমাশিষং সমবাপ্নুয়াৎ।
শীঘ্রং ধনী ভবামীতি বদন্ ন দোষবর্জ্জিতঃ।
২১ বিচারে পক্ষপাতং ন কর্ত্তুং সমুচিতং ভবেৎ।
যতো না প্রপক্ষখণ্ডার্থং মহাদোষং করিষ্যতি।
২২ দ্রব্যী ভবিতুমুদ্যোগী কুদৃষ্টিঃ সত্বরং ভবেৎ।
কিন্তু দৈন্যং তমাগচ্ছেৎ ন তৎ তেন বিবিচ্যতে।
২৩ জিহ্বয়া স্তুতিকারাদ্ যো ভর্ৎসনাকারিমানবঃ।
অনুগ্রহং পরং পশ্চাৎ স এব সমবাপ্নুয়াৎ।
২৪ চোরয়িত্বা ধনং পিত্রো র্য ইত্থং পরিভাষতে।
কলুষং বিদ্যতে নাত্র স মিত্রং নাশকারিণঃ।
২৫ অভিমানিমনুষ্যেণ বিরোধঃ পরিজন্যতে।
স এবাপ্যায়তে লোকো বিশ্বসেদ্ যঃ পরেশ্বরে।
২৬ বিশ্বসেদ্ যো নিজে স্বান্তে যথাজাতঃ স মানুষঃ।
কিন্তু রক্ষাং স আপ্নোতি যো বিবিচ্য প্রবর্ত্ততে।
২৭ দদাতি যো দরিদ্রায় দারিদ্র্যং তস্য নো ভবেৎ।
স শাপং লভতে নেত্রে যো নিমীলতি তান্ প্রতি।
২৮ পাপিনামুন্নতৌ সত্যাং গুপ্তাস্তিষ্ঠন্তি মানুষাঃ।
কিন্তু তেষু বিনষ্টেষু বর্দ্ধন্তে ধার্ম্মিকা জনাঃ॥

## २९ ऊनत्रिंशोऽध्यायः।

१ असकृद् भर्त्सितो यो नो भवेत् संनतकन्धरः।
स उच्छिन्नो भवेत् तस्य प्रतीकारो न विद्यते।
२ आनन्दो जायते लोके प्रोन्नते साधुमानवे।
किन्तु दुष्टाधिपत्ये हि भवन्ति दुःखिता जनाः।
३ विद्यायामनुरक्तो यः स पितुर्नन्दको भवेत्।
किन्तु यः पालयेद् वेश्यां धनान्यपव्ययेत सः।
४ करोति सुस्थिरं राज्यं सुविचारेण भूपतिः।
किन्तूत्कोचं य आदत्ते स राज्यं परिवर्त्तयेत्।
५ यो मानवः परिष्टौति स्वसमीपनिवासिनम्।
तदीयपादबन्धाय जालं संप्रस्तृणाति सः।
६ दुष्टः स्वकीयदोषेण धृतो भवति मानुषैः।
किन्तु यो धार्म्मिको लोकः स सानन्दः सुगायति।
७ धार्म्मिको दीनलोकानां विचारं प्रकरोति हि।
किन्तु पापी न तद् बोद्धुं निधत्ते तत्र मानसं।
८ नगरे निन्दके लोके ज्वाल्यते हव्यवाहनः।
किन्तु ज्ञानविशिष्टेन ततोऽमर्षो निवार्य्यते।
९ ज्ञानवानज्ञलोकश्च द्वाभ्यामपि विचारिते।
कोपो भवतु हास्यं वा तेन शान्तिर्न जायते।
१० घृतीयन्ते नरं साधुं मानुषा बधकारिणः।
किन्तु तत्प्राणरक्षार्थे चेष्टते सरलो जनः।

११ सर्व्वं मनोगतं मूढः प्रकाशयति तत्क्षणात्।
 किन्तु ज्ञानविशिष्टस्तत् कियत्कालं प्रगोपयेत्।
१२ अतथ्यग्राहिणो येच भवन्ति भूमिपालकाः।
 पापनिष्ठाः प्रजायन्ते तदीयाः सर्व्वसेवकाः।
१३ निःस्वोपद्रविणौ साक्षात् प्रकुर्व्वाते परस्परं।
 परमेशो द्वयोरेव लोचनानि प्रदीपयेत्।
१४ सुविचारो दरिद्रस्य क्रियते येन भूभृता।
 चिरकालं सुसंस्थायि तस्य सिंहासनं भवेत्।
१५ दण्डश्च भर्त्सना चोभौ ज्ञानं जनयतो नृणां।
 किन्त्वशासितसन्तानो मातु र्लज्जाकरो भवेत्।
१६ पापिलोके गते वृद्धिं बहुदोषा भवन्ति हि।
 किन्तु तेषामधः पातो धार्म्मिकैरेव दृश्यते।
१७ त्वं स्वकीयाय पुत्राय शास्तिं संप्रददासि चेत्।
 तदा स ते परां शान्तिं मनोनन्दञ्च दास्यति।
१८ सत्यं शास्त्रं परित्यज्य मनुष्यो दुष्टतामियात्।
 किन्तु स स्यान्नरो धन्यो व्यवस्थां यः प्रपालयेत्।
१९ वचोभिरेव भृत्यस्य दमनं नहि जायते।
 यतः स परिबुद्धापि न ददाति तदुत्तरं।
२० प्रपश्यसि वचोभि स्त्वं मनुष्यं किं हठात्कृतं।
 विद्यतेऽधिकप्रत्याशा ततोपि मूढमानुषे।
२१ आबाल्याद् येन मर्त्येन भृत्यः सुप्रतिपाल्यते।

शेषे सएव तं दासं सम पुत्रेण बुध्यते ।

२ यः कोपनो मनुष्यः स विरोधजनको भवेत् ।
क्रोधनो मानुषो यस्तु स भवेत् बहुपापकृत् ।

३ अहङ्कारो मनुष्यस्य तमेवाधो निपातयेत् ।
किन्तु नम्रमना लोको लोके सम्मानमाप्नुयात् ।

४ चोरितांशग्रहो लोको निजप्राणान् ऋतीयते ।
शृणोति शापथं वाक्यं किन्तु स न प्रकाशयेत् ।

५ भयं नरात् समुद्भूतम् उन्माथे पातयेन् नरं ।
किन्तु स्यात् सोऽवितो मर्त्यो विश्वसेद् यः परेश्वरे ।

६ प्रार्थ्यते बहुभि र्लोकै र्लोकशास्तुरनुग्रहः ।
किन्तु लोकविचारः स्यात् केवलात् परमेश्वरात् ।

७ धार्म्मिकस्य मनुष्यस्य पापो स्याद् र्नराम्पदं ।
तथा दुष्टमनुष्याणाम् अर्त्तनीय ऋजुर्जनः ॥

## ३० त्रिंशत्तमोऽध्यायः ।

१ आगुरो धर्म्मकथनं ७ तस्य प्रार्थनं १० नानोपदेशनञ्च ।

याकेः पुत्र आगुर् इथीयेलम् उकलञ्च यद्वाक्य मुक्तवान् यदुपदिष्टवांश्च तदेवैतत् ।

२ मूढोहं सर्व्वलोकेभ्यो धी र्मे नास्ति मनुष्यवत् ।
न चाभ्यस्ता मया विद्या धर्म्मज्ञानं न बुध्यते ।

४ को जनः स्वर्गमारोहत् को वावरूढवांस्ततः ।
मुष्टिना केन लोकेन संगृहीतः प्रभञ्जनः ।

४ वस्त्रेण मानवः को वा जलराशिं निबद्धवान्।
पृथिव्याः सकलां सीमां को नरो वा न्यरूपयत्।
तदीयं नामधेयं किं किं तत्पुत्रस्य नाम च।
यदि त्वं परिजानासि तर्हि मे कथ्यतां त्वया।
५ सर्व्वाणीश्वरवाक्यानि निर्म्मलानि भवन्ति हि।
संविश्वसन्ति ये तेषु तानि तत्फलकादिव।
६ तस्य वाक्यैः सह त्वं नाऽन्यत् किञ्चित् सम्प्रयोजय।
नो चेद् भर्त्सयिता त्वां स मृषावाग् भवितासि च॥
७ अहं वरद्वयं त्वत्तः प्रार्थये हे परेश्वर।
यावन्मे जीवनं तावत् तद् दातुं स्वीकुरुष्व च।
८ अलीकत्वं मृषावाक्यं मत्तस्त्वं सुविदूरय।
अदत्त्वा दैन्यवित्ते मां योग्यभोज्येन भोजय।
९ नो चेत् तृप्तो वदिष्यामि को भवेत् परमेश्वरः।
निःस्वो वा चोरयिष्यामि वक्ष्ये नामेश्वरं मृषा॥
१० प्रभोरग्रे न भृत्यस्य निर्व्वादं त्वं समाचरेः।
नो चेत् त्वं तेन संशप्त आगोयुक्तो भविष्यसि।
११ शपते पितरं स्वीयं शुभं मातुर्न नायते।
एतादृशोऽपि सन्तानो विद्यते पृथिवीतले।
१२ स्वीयात् मलाद् अनिर्णिक्तः स्वदृष्ट्या निर्म्मलो भवेत्।
एतादृशोऽपि सन्तानो विद्यते धरणीतले।
१३ दृक्पक्ष्मणी च दृष्टिञ्च प्रोच्चीकृत्य सुतिष्ठति।

एतादृशोऽपि मन्तानो विद्यते चौणिमण्डले।
१४ विद्यन्ते ये दरिद्रास्तान् पृथिव्यां परिभक्षितुम्।
नरेषु सन्ति ये दीनास्तान् जनानपि भक्षितुम्।
तेषां दन्ताः हनूदन्तास्त्रासिकर्त्तरिकासमाः।
एतादृशास्तु सन्ताना विद्यन्ते पृथिवीतले।
१५ द्वे कन्ये प्रतिविद्येते जलमध्ये जलौकसः।
देहि देहीति वाक्यं ते प्रभाषेते दिवानिशं।
त्रिवस्तूनि न तृप्यन्ति चत्वारि च कदाचन।
भूयिष्ठमभवच्चेति वाक्यं जातु वदन्ति नो।
१६ बन्ध्यागर्भः श्मशानञ्च पृथ्वी तृप्यति नो जलैः।
प्रभूतमिति वाक्यं नो वीतिहोत्रः प्रकाशयेत्।
१७ स्वकीयजनको येन नेत्रेण परिहस्यते।
स्वीयमातुर्निदेशं यत् चक्षुस्तुच्छीकरोति च।
काकैरुपत्यकायां तद् ध्रुवं समवकर्त्त्यते।
उत्क्रोशाख्यविहङ्गस्यार्भकैर्भक्ष्यिष्यते च तत्।
१८ त्रितयं मम बोधस्यागम्यं समभिजायते।
तथा चतुष्टयञ्चाहं नहि शक्नोमि वेदितुं।
१९ उत्क्रोशगमनं नाके पृदाकोः पर्व्वते गतिः।
पोतस्य गमनं सिन्धौ पुंसश्च युवतौ गतिः।
२० तस्याश्च गमनं तद्वद् या योषा व्यभिचारिणी।
भुक्त्वा संमृज्य वक्त्रं सा ब्रूतेऽघं न कृतं मया।

२१ वस्तुत्रयात् समुद्विग्नं जायते चौणिमण्डलं।
नहि चत्वारि संवोढुं क्षमते चौणिमण्डलं।

२२ अर्थाद् येन प्रभुत्वं वै क्रियते दासमेव तम्।
यो भक्ष्यैः परितृप्तः स्यात् तञ्चापि वालिशं जनम्।

२३ या हि व्यूढा भवेन्नारी ताञ्च याप्यर्त्तनोचिता।
स्वस्वामिनीधनानां याधिपत्यं कुरुते च तां।

२४ चितौ वस्तूनि चत्वारि चोदिष्टानि भवन्ति च।
किन्तु तान्येव चत्वारि ज्ञानवन्ति भवन्ति च।

२५ अर्थतो याश्च विद्यन्ते शक्तिहीनाः पिपीलिकाः।
ताश्च संचिन्वते भक्ष्यं ग्रीष्मकाल उपस्थिते।

२६ अपि स्वल्पबला ये स्युः शाफनो जन्तवः चितौ।
ते सर्व्वे प्रतिनिर्म्मान्ति गृहान् पाषाणपर्व्वते।

२७ शलभानान्तु सर्व्वेषां भूपति र्नहि विद्यते।
तथापि ते प्रगच्छन्ति सुसज्जेव वरूथिनी।

२८ मूषली हस्तपादाभ्यां भित्तिं धृत्वा प्रगच्छति।
राज्ञ अट्टालिकायाञ्च निवासं कुरुते स्वयं।

२९ अपरं त्रितयं वस्तु शोभनं प्रति गच्छति।
तथा चतुष्टयञ्चापि सुन्दरं परिगच्छति।

३० कस्यापि वदनं दृष्ट्वा घोटते न कदाचन।
एतादृशो मृगेन्द्रोऽस्ति बलवान् सर्व्वजन्तुषु।

३१ तथा रणहय श्छागो भूपतिश्च बहुप्रजः।

अध्यज्ञानस्य कर्म्माणि कृतानि गर्व्वतस्त्वया ।
दुश्चिन्ता वा कृता काचित् तदास्ये स्वकरं क्षिप ।
यतो दुग्धं समालोडात् नवनीतं यथा भवेत्।
नासामर्द्दनाच्चापि वहिर्गच्छति शोणितं ।
क्रोधस्यालोचनादेव विरोधो जायते तथा ॥

## ३१ एकत्रिंशोऽध्यायः ।

१ लिमूयेलराजस्य मातुरुपदेशकथनं ८ उत्तमस्त्रीवर्णनञ्च ।

लिमूयेलराजस्य माता तं यदुपादिशत् तस्य कथा ।
किं वदिष्यामि हे पुत्र किं वच्मि गर्भसम्भव ।
किमहं ते वदिष्यामि हे वरप्राप्त मे सुत ॥

लिमूयेल् नोचिता राज्ञां स्याद् द्राक्षारसप्रकृता ।
नचासक्तिः सुरापाने भूपानामुचिता भवेत् ।
ते तां पीत्वा व्यवस्थायाः समुपेष्यन्ति विस्मृतिं ।
अन्यायं ते करिष्यन्ति सर्व्वदुःखिजनान् प्रति ।
मृतकल्पमनुष्याय मदिरा दीयतां त्वया ।
तिक्तमानसलोकाय देयो द्राक्षारसस्त्वया ।
तं पीत्वा स नरः स्वीयं दीनत्वं परिविस्मरेत् ।
स्वीयदुःखं पुनस्तस्य मानसं नहि संस्मरेत् ।
मूकस्यार्थं स्वकीयं त्वं व्यादेहि वदनं स्वयं ।
व्यादेहि च निजं वक्त्रं दीनलोकविचारणे ।
व्यादाय वदनं स्वीयं धर्म्मतस्त्वं विचारय ।

दरिद्रान् दुःखिलोकांश्च धर्म्मतस्त्वं विचारय॥

८ या सती जायते नारी कर्त्ता प्राप्तुं क्षमो भवेत्।
पद्मरागमणिभ्योऽपि तन्मूल्यमधिकं भवेत्।

० तत्पति र्मनसा सार्द्धं तस्यामेव सुविश्वसेत्।
तस्या स्त्रिया न विद्येत लाभाभावः कदाचन।

१ यावज्जीवं शुभं पत्युः सा करोति दिने दिने।
अमङ्गलं स्वकीयस्य स्वामिनो नाचरेच्च सा।

२ सा नारी निजकार्य्याणि स्वेच्छया प्रकरोति हि।
अन्विच्छति च मेषोर्णाम् अतसीञ्च गवेषयेत्।

३ यथा वाणिज्यपोतेन दूरादानीयते धनं।
तथैव स्वीयखाद्यानि दूरादानयते हि सा।

४ रात्रिशेषे समुत्थाय खाद्यं परिजनाय सा।
निरूपितानि कर्म्माणि स्वदासीभ्यो ददाति च।

५ क्षेत्राणि सुविविंक्ते च तानि क्रीणाति च स्वयं।
फलेन निजहस्तस्य द्राक्षाक्षेत्रञ्च रोपयेत्।

६ कटिदेशं निबध्नाति स्वकीयेन बलेन सा।
बलवन्तौ भुजौ स्वीयौ सा योषित् प्रकरोति च।

७ वाणिज्यस्य स्वकीयस्य परिभुंक्ते फलानि सा।
क्षणदायां न तस्याश्च दीपो निर्व्वाणतामियात्।

८ कार्य्याणि स्वीयहस्तेन तर्कुना विदधाति सा।
पश्चीञ्च प्रतिगृह्णाति स्वकीयेन करेण सा।

र्यित हवा से ...

ायपरिवारेषु शीतकाले विशेषतः

न्ते द्विगुणीकृत्य वसनं परिधीयते।

या निर्म्मीयते स्वार्थं विचित्राच्छादनांशुकं।

कूलं रक्तवर्णञ्च वस्त्रं परिदधाति सा।

स्वकीयदेशसंस्थाश्च प्राचीना ये हि मानवाः।

ते सर्व्वे परिचिन्वन्ति सभायां तत्पतिं सदा।

विक्रीणाति च वस्त्रं साऽतसीतन्तुविनिर्म्मितं।

विक्रीणीते वणिग्भ्यश्च निर्म्माय कटिबन्धनं।

सम्मानञ्च बलं तस्या वस्त्ररूपं प्रजायते।

कुरुते सा महानन्दं भविष्यत्समयानधि।

५ व्यादाय वदनं स्वीयं ज्ञानवाक्यानि वक्ति सा।

अनुग्रहव्यवस्था च तज्जिह्वाग्रेऽवतिष्ठति।

६ स्वकीयपरिवाराणाम् आचारान् विविनक्ति सा।

आलस्यजातखाद्यानि सा कदापि न खादति।

७ तत्सन्ताना: समुत्थाय तां सुधन्यां वदन्ति च।

तस्याः पतिश्च तामित्थं सर्व्वदा सुप्रशंसति।

८ कुर्व्वन्ति कन्यका बह्व्यो भद्रकर्म्माणि यद्यपि।

तथापि सर्व्वनारीणां मध्ये त्वं श्रेयसी परा।

९ लावण्यं वञ्चनोत्पादि सौन्दर्य्यञ्चानृतं भवेत्।

हन्तु भीता परंशाद् या तत्प्रशंसा भविष्यति ।

स्यायत्र प्रदीपित तस्याः करकृतं फलं ।

विचारस्य सत्कार्यां क्रिया तस्याः प्रशस्यताम् ॥

हितोपदेशोऽयं समाप्तः ।

---